चू(१)डादिकण्ठनिम्नेऽर्धे शे(२)षार्धे कर्णपृष्ठके॥७५॥
क(३)र्णे पूर्वे त्वपाङ्गे च तस्य मूले च (४)विन्यसेत्॥
हृदये मनुकोणस्थ(५)शक्तयोऽपि च पूर्ववत्॥ ७६ ॥
सर्वसिद्ध्यादिकं कण्ठे प्रादक्षिण्येन विन्यसेत्॥

---

ललाटम्। अ(६)र्धनिम्ने कर्णोत्तरानन्तरं न्यसेदिति सम्प्रदायः। निम्नं शिरःपश्चान्निम्नस्थलम(७)वटम्। कोऽर्थः? चूडादिनेत्रमूलापाङ्गकर्णपूर्वपृष्ठेषु (८)सर्वज्ञादीनां दशानामर्धं विन्यसेत्। (९)अथवाऽऽसामेवोत्तरार्धमवटूवन्तरकर्णपृष्ठपूर्वान्यनेत्रापाङ्गमूलेषु विन्यसेदित्यर्थः। ननु सर्वज्ञादीनां नाम न कथितं(१०), कथमत्र ता एव न्यस्तव्याः कथ्यन्ते? उच्यते पूर्वचक्रे वशिन्याद्याः न्यस्तव्याः कथिताः। अनन्तरोपरिचक्रे सर्वसिद्धाद्याः न्यस्तव्याः कथ्यन्ते। अतस्तयोरपि (११)मध्यदशस्थानेषु पारिशेष्यात्सर्वज्ञाद्याः न्यस्तव्या इति गृह्यन्ते॥ ७५—७६॥

---

(१) 'चूडादिके च निम्नाग्रे' ख०।
(२) 'शेषार्धे कर्णपृष्ठयोः' ख०।
(३) 'कर्णपूर्वे त्वपाङ्गे च' ख०।
(४) 'पूर्वतः' ख०।
(५) 'कोणस्थाः' ख०।
(६) 'तदपि कर्णोत्तरानन्तरं' ख०।
(७) 'मवटुरेव' ख०।
(८) 'सर्वसिद्ध्यादीनां' ख०।
(९) 'अथ तासामेवार्द्धं अवटुकर्णपृष्ठ०' ख०।
(१०) 'कीर्त्तितं' ख०।
(११) 'मध्यदेश' ख०।

नाभावष्टदलं (१)तत्तु वंशे वामे च पार्श्वके॥७७॥
उदरे सव्यपार्श्वे च न्यसेदादिचतुष्टयम् ॥

---

सर्वसिद्ध्याद्यावरणन्यासमाह(२)—सर्वसिद्ध्यादिकमिति। स्पष्टम् ।

सर्वसङ्क्षोभिण्याद्यावरणन्यासमाह—हृदये इति ।

हृदये वक्षसि। पूर्ववत्प्रादक्षिण्येन मनुकोण(३)स्थशक्तयश्चतुर्दशारकोणनिवासिन्यः सर्वसङ्क्षोभिण्याद्याः । न्यस्तव्या इति शेषः ।

अनङ्गकुसुमाद्यावरणन्यासमाह—नाभाविति ।

नाभौ नाभिप्रदेशे। अष्टदलं पद्मम्। [तत्त्वि(४)ति। तत्पूर्वोक्तानङ्गकुसुमाद्यष्टकं परामृश्यते। तदादिचतुष्टयमनङ्गकुसुमाऽनङ्गमेखलाऽनङ्गमदनाऽनङ्गमदनातुराणां चतुष्टयम्] । (५)वंशः पृष्ठास्थि । सव्यपार्श्वम् (६)दक्षिणपार्श्वम् । वंशवामान्तरालादि वंशवामपार्श्वयोरन्तरालम् । आ(७)दिशब्दाद्वामपार्श्वपुरोभागयोरन्त(८)रालपुरोभागदक्षिण(९)पार्श्वयोरन्तरालं दक्षपा-

---

(१) 'नाभौ त्वष्टदलं' ख० ।

(२) 'सर्वसिद्ध्यादिकमिति' इत्यारभ्य 'हृदये इति' इत्यन्तो ग्रन्थः क० पु० नास्ति ।

(३) 'कोणस्थाः शक्तय०' ख० ।

(४) [ ] एतच्चिह्नान्तर्गतो ग्रन्थः ख० पु० नास्ति ।

(५) 'तद्धि वंशे वंशपृष्ठास्थिनि' ख० ।

(६) 'दक्षिणं वाम०' ख० ।

(७) 'आदिशब्दात्' नास्ति ख० ।

(८) 'रन्तरालं' ख० ।

(९) 'दक्षिणपार्श्वं' ख० ।

वंशत्वामान्तरालादि न्यसेदन्य(१)चतुष्टयम् ॥ ७८ ॥
स्वाधिष्ठाने न्यसेत्स्वस्य पूर्वाद्दक्षावसानकम् ॥
चतस्रस्तु चतस्रस्तु चतुर्दिक्षु क्रमान्न्यसेत् ॥ ७९ ॥
मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः ॥

---

ऊर्ध्वपृष्ठवंशयो(२)रन्तरालं गृह्यते । अन्य(३)चतुष्टयमनङ्गरेखानङ्गवेगिन्यनङ्गाङ्कुशानङ्गमालिनीनां चतुष्टयम् । नाभि(४)देशस्य पश्चिमादिदिक्षु अनङ्गकुसुमादीनां (५)न्यसेदित्यर्थः॥७७-७८॥

कामाकर्षिण्याद्यावरणन्यासमाह—स्वाधिष्ठाने इति ।

स्वाधिष्ठानकमलप्रदेशे स्वस्य पूर्वात् पूर्वदिगादिभागमारभ्य दक्षावसानकं दक्षिणदिगवसानपर्यन्तम् । चतुर्दिक्षु प्रतिदिशं चतस्रश्चतस्रः शक्तयः कामाकर्षिण्याद्याः क्रमेण न्यस्तव्याः । ननु कामाकर्षिण्याद्या इति कथमनुमी(६)यन्ते, इति चेदुच्यते । पूर्ववदेव पूर्वो(७)त्तरचक्रयोः शक्तीनां नामग्रहणात् मध्यचक्रशक्तीनां पारिशेष्यान्नामान्यनुक्तान्यपि अवसीयन्त इति ॥ ७९ ॥

सर्वसङ्क्षोभिण्यादिमुद्राशक्त्यावरणन्यासमाह—मूलाधा-

---

(१) 'अन्यच्चतु०' ख० ।
(२) 'वंशयोश्चान्तरालं' ख० ।
(३) 'अन्यच्चतुष्टयं' ख० ।
(४) 'नाभिदेशस्थपश्चिमादिदक्षिणपार्श्वान्तमनङ्ग०' ख० ।
(५) 'वाय्वादिनैर्ऋतान्तं' इत्यधिकं ख० ।
(६) 'कथमवसीयन्ते' क० ।
(७) 'पूर्वोत्तर०' इत्यारभ्य 'अवसीयन्त इति' इत्यन्तस्य ग्रन्थस्य स्थाने 'पूर्वोक्तचक्रशक्तीनां नामग्रहणात् पारिशेष्यात् नामान्युक्तान्यवसीयन्ते इति' इति ख० पु० पाठः ।

पुनर्वंशे च (१)सव्ये च वामे चैवान्तरालके ॥ ८० ॥
ऊर्ध्वाधो दशमुद्राश्च ऊर्ध्वाधोवर्जितं पुनः ॥

---

रे इति ।

मूलाधारे मूलाधारप्रदेशे । शेषं स्पष्टम् ।

ननु किं मूलाधारे मुद्रादशकं केन(२) विधानेन न्यस्तव्यमित्याशङ्कायामाह–पुनर्वंशे इति ।

पुनः शब्दान्नाभौ त्वष्टदलं (३)तत्रत्यान्यष्टदलस्थानोक्तस्थानान्युच्यन्ते । वंशे पृष्ठवंशे । सव्ये च पार्श्वे । चकारादुत्तर(४)दक्षिणयोः पार्श्वयोर्ग्रहणम् । वामे चैवान्तरालके पृष्ठवंशवामपार्श्वान्तराले । चकाराद्वामपार्श्वाद्यन्तरालानि गृह्यन्ते । कोर्थः? पृष्ठवंशादिदिक्षु (५)वायव्याद्यन्तरालेषु (६)चोर्ध्वाधश्च(७) दश मुद्राः न्यसेत् ॥ ८० ॥

ननु ऊर्ध्वाध इति किमान्तरं स्थानद्वयं, (८)अन्यन्नेत्याह–ऊर्ध्वाध इति ।

आन्त(९)रोर्ध्वाधःस्थानद्वयम् ।

---

(१) 'पुनः सव्ये च वंशे च' ख० ।

(२) 'केन विधानेन' इत्यत्र 'ध्यानेन' इति ख० पु० पाठः ।

(३) 'तद्वत्यत्राऽष्टदलन्यासोक्तस्थानान्युच्यन्ते' ख० ।

(४) 'चकारादुत्तरयोर्ग्रहणम्' ख० ।

(५) 'दिशि' ख०

(६) 'वायव्याद्यन्तराले' ख० ।

(७) 'चोर्ध्वाधस्ताच्च' ख० ।

(८) 'अन्यत्' इति नास्ति ख० ।

(९) 'अन्तरादूर्ध्वाधः स्थानद्वयम्' क० ।

ब्रह्माण्याद्यष्टकं दक्षजङ्घायां तास्तु पूर्ववत् ॥ ८१ ॥

वामजङ्घां समारभ्य वामादिक्रमतोऽपि च ॥

---

इन्द्रेशानदिशोर्मध्ये स्थानम(१)न्यत्प्रकीर्तितम् ।
नैर्ऋताम्बुदिशो(२)र्मध्ये स्थानमन्य(३)त्प्रकीर्तितम् ॥

तत्त्वविमर्शिन्यामस्मद्गु(४)रूक्तरीत्या दशलोकपालार्चनरीत्यैव स्थानद्वयं शिष्टमुद्रा(५)द्वयस्य कल्पनीयम् ।

ब्रह्माण्याद्यावरणन्यासमाह—ब्रह्माण्यादीति ।

विन्यसेत् [ इत्यनुषङ्गः । शिष्टं ] (६)स्पष्टम् ।

ननु दक्ष(७)जङ्घायां विन्यसेदित्युक्तं, तत्र तासां कानि स्थानानीत्यत(८)आह—तास्त्विति ।

ताः ब्रह्माण्याद्याः पूर्ववत् 'पुनः सव्ये च वंशे च' इत्युक्तस्थानेषु । अत्र पृष्ठवंशशब्देन पश्चाद्भागो लक्ष्यते । दक्ष(९)जङ्घायाः पश्चिमादिचतुर्दिक्षु वायव्यादिविदिक्षु च । ताः ब्रह्माण्या(१०)द्याः न्यस्तव्या इत्यर्थः ॥ ८१ ॥

अणिमाद्यावरणन्यासमाह—वामजङ्घामिति ।

---

(१) 'स्थानमस्य प्र०' ख० ।
(२) 'नैर्ऋत्यश्वीशयोर्म०' क० ।
(३) 'स्थानमस्य' ख० ।
(४) 'मस्मदुक्त०' ख० ।
(५) 'शिष्टमुद्रास्थानद्वयमित्यर्थः' ख० ।
(६) कक्षान्तर्गतं नास्ति क० पुस्तके ।
(७) 'दक्षिण' क० ।
(८) 'अतः' इति नास्ति ख० ।
(९) 'दक्ष' नास्ति क० ।
(१०) 'वायव्याद्यन्तरालेषु' ख० ।

सिद्ध्यष्टकं न्यसेत्तेषु द्वयं पादतले न्यसेत् ॥ ८२ ॥
कारणात्प्रसृतं न्यासं दीपाद्दीपमिवोदितम् ॥
एवं विन्यस्य देवेशीं (१)स्वाभेदेन विचिन्तयेत् ॥८३॥
ततश्च करशुद्ध्यादिन्यासं कुर्यात्समाहितः ॥

---

वामजङ्घां समारभ्य वामजङ्घायाः पश्चिमभागमारभ्य । वामादिक्रमतोऽपि वामान्तरालक्रमेण । तेषु पूर्वोक्तेषु स्थानेषु अ-(२)ष्टसु, सिद्ध्यष्टकं न्यसेत् (३)इति शिष्टद्वयं पादतले पाद-(४)तलयोर्न्यसे(५)दित्यर्थः ॥ ८२ ॥

उक्तन्यासस्योत्कर्षं दर्शयन्नु(६)पसंहृत्य फलभूतां वासनां विधत्ते–कारणादिति ।

कारणात्प्रकाशविमर्शसामरस्यरूपान्निखिलजगद्रूपात् । दीपाद्दीपमिव प्रसृतं, महाभासं कारणानुरूपम्, एवमुक्तप्रकारेण, उदितं कथितं, न्यासं विन्यस्य, स्वात्मनोऽभेदेन विचिन्तयेत् । श्रीचक्रावयवान् सशक्तिकान् । स्वदेहावयवैरपृथक्त्वेन विभाव्य तदधिष्ठात्र्या परया च स्वात्मनो(७)ऽभेदं भावयेदित्यर्थः ॥८३॥

उक्तैस्त्रिभिः षोढादिभिर्न्यासैः परचिदानन्दलक्षणं भावयन् परिपक्वहृदयो बाह्यपूजाक्रियायोग्यतायै करशुद्ध्यादिन्यासं

---

(१) 'देवेशि !' क० ।
(२) 'अष्टसु' नास्ति ख० ।
(३) 'इति' नास्ति क० ।
(४) 'पादतलयोः' नास्ति ख० ।
(५) 'इत्यर्थः' नास्ति ख० ।
(६) 'दर्शयितुमुप०' ख० ।
(७) 'स्वात्मनोऽप्यभेदं' ख० ।

अहं ते कथयाम्यद्य विद्यान्यासं शृणु प्रिये ! ॥ ८४ ॥
मूर्ध्नि गुह्ये च हृदये नेत्रेषु(१)त्रितयेषु च ॥
श्रोत्रयोर्युगले चैव(२)मुखे च भुजयोस्तथा(३) ॥ ८५ ॥

---

कुर्यादित्याह—तत इति ।

ततस्त्रिविधन्यासानन्तरं करशुद्ध्यादिन्यासम् ।

कर्मणा(४)त्मपरामृष्टकार्य(५)भूताङ्गुलिस्थितम् ।
करोमि चिन्मयीं शुद्धिं करयोः स्पर्शबोधि(६)नीम् ॥

इत्यभियुक्तवचनोक्तरीत्या करशुद्धिन्यास आदिर्यस्य न्यासस्य, जातावेक(७)वचनम् । समाहितः सावहितः । करशुद्ध्यादिन्यासश्चतुः(८)शतिशास्त्रोक्तः । अतो नात्रो(९)च्यते, केवलं नाम्नैव गृह्यते ॥८४॥

तत्रानुक्तं विद्यान्यासमाह—मूर्ध्नीति ।

(१०)विद्याया बीजत्रयेण न्यासो विद्यान्यासः । मूर्ध्नि वाग्भवबीजं, हृदये शक्तिबीजं, गुह्ये कामराजबीजम् । एवं सर्वत्र

---

(१) 'नत्रत्रितय एव च' ख० ।
(२) 'देवि !' ख० ।
(३) 'पुनः' ख० ।
(४) 'कारणा०' ख० ।
(५) 'रूपा०' ख० ।
(६) 'शोधिनीम्' ख० ।
(७) 'जातावेकत्वम्' ख० ।
(८) 'चतुःशती' ख० ।
(९) 'नोच्यते' ख० ।
(१०) 'जानुनि जान्वोः' इत्यधिकं ख० पुस्तके ।

पृष्ठे जान्वोश्च नाभौ च विद्यान्यासं विधाय (१)च ॥
करशुद्धिं पुनश्चैव आसनादिष(२)डङ्गकम् ॥ ८६ ॥

---

स्थानत्रये बीजत्रयमुच्चरन्न्यसेदित्यर्थः । [शिष्टं (३)स्पष्टम्] ।

करशुद्ध्यादीनां नामान्या(४)ह—करशुद्धिमिति ।

वाग्देव्यो वशिन्याद्याः । श्रीकण्ठादिन्यासः स्वच्छन्दसङ्ग्रहोक्तः, तन्त्रान्तरे प्रसिद्धत्वादिह नोक्तः । शिष्टं स्पष्टम् ।

कामेश्वर्यादिदेवीनां न्यासमाह—आधारे इति ।

बैन्दवस्थाने शिखायामिति व्यत्ययेन क्रमो ज्ञेयः । बैन्दवस्थानम् ।

दीपाकारोर्ध्वमात्रश्च लला(५)टे वृत्त मिष्यते ।

इति पूर्वोक्तं ललाटम् । शिखा नाम कुण्डलिन्या अग्रं शिवस्य विश्रान्तिस्थानम् । अत्र श्रुतिः 'तस्याः (६)शिखाया मध्ये परमात्मा व्यवस्थितः' इति । तेन शि(७)खाशब्देन तद्व्याप्तिस्थानं ब्रह्मरन्ध्रं लक्ष्यते । अग्निचक्रादिकाः 'अग्निचक्रे कामगिर्यालये (८)मित्रेशनाथात्मके श्री(९)कामेश्वरीदेवीरुद्रात्मशक्ति-

---

(१) 'समाचरेत्' ख० ।
(२) 'आसनानि ष०' ख० ।
(३) कंसान्तर्गतं नास्ति ख० ।
(४) 'न्यासमाह' क० ।
(५) 'ललाटं वृत्तइष्यते' क० ।
(६) 'शिवः' इत्यधिकम् ख० ।
(७) 'शिखाशब्देन' नास्ति ख० ।
(८) 'मित्रीशनाथा०' ख० ।
(९) 'श्री' नास्ति ख० ।

श्रीकण्ठादीनि (१)वाग्देवीराधारे हृदये पुनः ॥
शिखायां बैन्दवस्थाने त्वग्निचक्रादिका न्यसेत् ॥८७॥
तत्त्वत्रयं समस्तं च विद्याबीजत्रयान्वितम् ॥

---

श्रीपादुकां पूजयामि । सूर्यचक्रे जाल(२)न्धरपीठे षष्ठीशनाथात्मके वज्रेश्वरीदेवीविष्णवात्मशक्तिश्रीपादुकां पूजयामि । सोमचक्रे पूर्णगिरिपीठे ओड्डीशनाथात्मके भगमालिनीदेवीब्रह्मात्मशक्तिश्रीपादुकां पूजयामि । ब्रह्मचक्रे ओ(३)ड्याणपीठे चर्यानाथात्मके श्रीमहात्रिपुरसुन्दरीदेवीपरब्रह्मात्मशक्तिश्रीपादुकां पूजयामि'। इति मन्त्रैर्न्यस्तव्याः। शक्तयोऽग्निसूर्यसोमब्रह्मचक्रादिकाः (४)। कोऽर्थः? आधारहृदयभ्रूमध्यब्रह्मरन्ध्रेषु वह्निसूर्यसोमब्रह्मचक्रेषु कामगिरिजालन्धर(५)पूर्णगिर्योड्याण(६)पीठेषु रुद्रविष्णुब्रह्मपरब्रह्मात्मकशक्तीः (७)कामेश्वरीवज्रेश्वरीभगमालिनीमहात्रिपुरसुन्दरीः न्यसेदित्यर्थः । अयमेवार्थः सम्प्रदायविद्भिर्देशिकेन्द्रैः (८)पद्धतिषु प्रपञ्चितः ॥८५–८७॥

तत्त्वन्यासमाह—तत्त्वत्रयमिति ।

तत्त्वत्रयं आत्मविद्याशिवाख्यतत्त्वानां त्रयम् । समस्तं च

---

(१) 'श्रीकण्ठादींश्च' ख० ।
(२) 'जालन्ध्र' क० ।
(३) 'उडियान' ख० ।
(४) 'अग्निचक्रादिकाः' अधिकं ख० ।
(५) 'जालन्ध्र' क० ।
(६) 'उड्डियाण' ख० ।
(७) 'शक्तीः' नास्ति ख० ।
(८) 'देशिकैः' क० ।

पादादिनाभिपर्यन्तमागलं शिरसस्तथा ॥ ८८ ॥

---

तत्त्वत्रयसमष्टिरूपं तुरीयं तत्त्वम् । तदुक्तं स्वच्छन्दसङ्ग्रहे-

धरादिमायान्तमात्मतत्त्वम(१)न्तर्गतं स्मृतम् ।
शुद्धविद्येश्वरसदाशिवविद्या(२)ख्यतत्त्वगाः ॥
शिवशक्तिद्वयं चैव शिवतत्त्वं प्रकीर्तितम् ।
प्रमातृमेयप्रमितिरूपमेतत्त्रयात्मकम् ॥
एतत्तत्त्वं शिवतत्त्वं सर्वतत्त्वमयं शुभम् ।

इति (३)विद्याबीजत्रयान्वितम् । विद्यायाः बीजानि वाग्भवकामराजशक्तिबीजानि । एतद्बीजसमुदायरूपं तुर्यबीजम् । तैश्चतुर्भिर्बीजैरन्वितं पादादिनाभिपर्यन्तं स्पष्टम् । आ(४)गलमित्यादिसामर्थ्यान्नाभ्याद्यागलं ल(५)क्ष्यते । शिरस इति पञ्चमीसामर्थ्याद्गलादिति (६)च लभ्यते । कोर्थः ? आत्मविद्याशिवतुरीयतत्त्वानि मूलविद्यावाग्भवकामराजशक्तितुरीयबीजादिकानि चतुर्थ्यन्तनमोन्तकानि उच्चार्य पादादिनाभि(७)पर्यन्तं नाभ्यादिगलान्तं गलादिशिरोन्तं समुपस्पृ(८)श्य व्यापकं न्यसेदित्यर्थः ।

---

(१) 'तत्त्वस्यान्त०' ख० ।
(२) 'शिवविद्याख्यतत्त्वगाम्' ख० ।
(३) 'इति' नास्ति क० ।
(४) 'स्पष्टम्, आगलमित्यादि'इत्यत्र 'पर्यन्तपद'इतिख० पु० पाठः।
(५) 'लभ्यते' ख० ।
(६) 'च' नास्ति ख० ।
(७) 'नाभ्यन्तं' ख० ।
(८) 'संस्पृश्य' ख० ।

व्यापकं चैव (१)विन्यस्य स्वात्मीकृत्य परं पुनः ॥

---

भूयोऽपि पराहन्ताभावनामाह—स्वात्मीकृत्येति ।

परं विश्वोत्तीर्णं तेजः पुनः स्वात्मीकृत्य पूर्वं श्रीचक्रन्यासानन्तरं स्वाभेदेन विचिन्तयेदिति । [ परेणै(२)क्यमुक्तम् । इदानीं करशुद्ध्यादिन्यासानन्तरमपि पुनः परज्योतिर्मायावशात्स्वभिन्नमिव प्रतीयमानं स्वाभेदेन विचिन्तयेदिति ]। स्वात्मीकृत्य पुनः करशुद्ध्यादिन्याससामर्थ्यान्माया(३)पगमे श्रीमहात्रिपुरसुन्दरीं स्वात्मतया विभाव्येत्यर्थः ।

अमृतप्लावनमाह—सन्तर्पयेदिति ।

सौम्यं ब्रह्मरन्ध्राधोमुख(४)सहस्रदलकमलकर्णिकामध्यगतपूर्णसोममण्डलमध्यस्थितत्रि(५)कोणान्तरस्थमनच्कानुत्तरात्म- [ हार्ध(६)कलात्मकं सौम्यं मूलाधारचतुर्दलकमलकर्णिकामध्यगतपूर्णवह्निमण्डलमध्यगतत्रिकोणान्तरस्थितमनच्कात्मक] सपरार्धकलारूपमाग्नेयं द्वयोरमृतानल(७)कुण्डलिनीरूपयोरध ऊर्ध्वं प्रस(८)रतोर्योनिलिङ्गाकारयोः सामरस्यात्म(९)सरदमृतद्रवासा-

---

(१) 'चेति' ख० ।

(२) कंसान्तर्गतं नास्ति ख० ।

(३) 'मायापारगं स्वात्म०' ख० ।

(४) 'सहस्रारकमल' ख० ।

(५) 'त्रिकोणान्तरस्थितमनकात्मक' क० ।

(६) कंसान्तर्गतो ग्रन्थो नास्ति ख० ।

(७) 'कुण्डलीरूपयोः' ख० ।

(८) 'प्रसरयोः' क० ।

(९) 'क्षरदमृत' ख० ।

सन्तर्पयेत्पुनर्देवीं सौम्याग्नेयामृतद्रवैः ॥ ८९ ॥
एवं चतुर्विधो न्यासः कर्तव्यो वीरवन्दिते! ॥
षोढा न्यासोऽणिमाद्यश्च मूलदेव्यादिकः प्रिये! ॥ ९० ॥
करशुद्ध्यादिकश्चैव साधकेन सुसिद्धये ॥
प्रातः(१)काले तथा पूजासमये होमकर्मणि ॥ ९१ ॥

---

रैः सन्तर्पयेत् आप्लावयेत्। अयमेव सम्प्रदायाविद्भिर्दीक्षितैः पद्धतिषु परान्यास (२)इत्युच्यते ॥८८-८९॥

उक्तचतुर्विधन्या(३)समनुवादपुरःसरमुपसंहरति एवमिति। एवमुक्तप्रकारेण। षोढान्यासोदिसुसिद्धये सुखेन न्याससामर्थ्यान्निराकृतप्रत्यूहतया परमानिःश्रेयसप्राप्तये साधकेन मुमुक्षुणा कर्तव्यः, न तु सिद्धेन तस्य मुक्तत्वात्। (४) [न ध्यानं तपःक्रिया ।] तदुक्तं विज्ञानभैरवभट्टारकैः-

(५)तैरेव पूज्यते द्रव्यैस्तर्पयेद्वा परापरः ।
यश्चैव पूजकः (६)सर्वः स एवैकः क पूजनम् ॥ इति ।

न्यासचतुष्टयस्य कालभेदेन विनियोगमाह-प्रातरिति ।

प्रातःकाले षोढान्यासं, पूजासमये अणिमादिन्यासं, हो(७)मसमये मूलदेव्यादिकन्यासं, जपकाले करशुद्ध्यादिन्यासं

---

(१) 'कालेऽथ वा पूजाकाले वा हो०' ख० ।
(२) 'न्यास उच्यते' ख० ।
(३) 'न्यासानुवाद०' क० ।
(४) कंसान्तर्गतो ग्रन्थो नास्ति ख० ।
(५) 'यैरेव' ख० ।
(६) 'सर्व' ख० ।
(७) 'होमकाले मूलविद्यादिन्यासं' ख० ।

जपकाले (१)तथा तेषां विनियोगः पृथक् पृथक् ॥
पूजाकाले समस्तं वा कृत्वा (२)साधकपुङ्गवः ॥९२॥
षट्त्रिंशत्तत्त्वपर्यन्तमासनं परिकल्प्य च ॥

---

कुर्यादिति । अयं पृथक् पृथक् विनियोगः । अथवा पूजाकाले समस्तं चतुर्विधं न्यासं कृत्वा साधकपुङ्गवः साधकश्रेष्ठश्चतुर्विधन्यासकरणसामर्थ्याद्विशीर्यमाणपाशपटलत्वात्प्रत्यासन्न(३)मोक्षत्वात्कृतकृत्य एव ॥९०-९२॥

षट्त्रिंशदिति ।

षट्त्रिंशत्तत्त्वपर्यन्तं क्षित्यादिशिवान्तं तत्त्वसमुदायरूपमासनं परिकल्प्य चिन्मरीचीनामाधारत्वादासनं श्रीचक्रं परिकल्प्य । तदुक्तं श्रीपराक्रमे—

हृत्सरोजान्तरे (४)ध्यायन् पृथिव्यादि शिवान्ति(५)कम् ।
गुप्तादितत्त्व(६)कुसुमक्षेपणाऽऽसनतां न(७)येत् ॥

गुप्तादि । योगिनीनामि(८)त्यस्यादौ समस्तप्रकटपदमध्याहार्यम् । आदिपदेन गुप्ततरसम्प्रदायकुलकौलनिगर्भरहस्यातिरहस्यपरापररहस्ययोगिन्यो गृह्यन्ते । बलिः पूजा । तत्र निघ-

---

(१) 'कालेऽथ वा तेषां' ख० ।
(२) 'साधकवित्तमः' ख०
(३) 'प्रत्यासन्न मोक्षत्वात् । अत एव' ख० ।
(४) 'न्यासं पृ०' ख० ।
(५) 'शिवान्तिमम्' ख० ।
(६) 'सौवर्णतत्त्व' ख० ।
(७) 'इति' इत्यधिकम् ख० ।
(८) 'मित्यत्र' ख० ।

गुप्तादियोगिनीनां च मन्त्रेणाऽथ बलिं ददेत् ॥९३॥
पिण्डरूपपदग्रन्थिभेदनाद्विघ्नभे(१)दकम् ॥

---

पद्मः-(२)'बलिः पूजोपहारः' इति । महाकविभिरप्युक्तम्- "अवचितबलिपुष्पा" ( कुमारसं० स० १ श्लो० ६० ) इति । कोऽर्थः ? भावितात्मा(३)बाह्यपूजाकरणात् पूर्वम् ।

यद्यद्बाह्यं वक्ष्यमाणं तत्तदान्तरमाचरेत् ।

इत्यस्मद्गुरुक्त(४)रीत्या अन्तर्यागार्थं स्वशरीरं त(५)त्त्वसमुदायरूपं (६)श्रीचक्रं विभाव्य "समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलकौलनिगर्भरहस्यातिरहस्यपरापररहस्ययोगिनी(७)श्रीपादुकाभ्यो नमः" इति योगिनीमूलमन्त्रेण स्वशिरसि पूजां कुर्यादित्यर्थः । (८)एतेन बाह्यपूजां सर्वामपि (९)आदावन्ते च कुर्यादिति सूच्यते ॥९३॥

आ(१०)न्तरविघ्ननि(११)रासमाह—पिण्डरूपेति ।

---

(१) 'भेदनम्' ख० ।
(२)'बलिः पूजोपहारेऽपि दण्डभेदे कलौ शिवे-इति' ख० ।
(३) 'भावितात्मपूजाकरणात्' ख० ।
(४) 'इत्यस्मदुक्तरीत्या' ख० ।
(५) 'तत्त्वं' ख० ।
(६) 'श्री' नास्ति ख० ।
(७) 'श्री' नास्ति ख० ।
(८) 'अत एव' ख० ।
(९) 'आदावन्तः कुर्या०' क० ।
(१०) 'अन्तविघ्न' क० ।
(११) 'निवारणमाह' ख० ।

गुह्यहृन्मुखमूर्धसु विद्यान्यासेन सुन्दरि!॥ ९४ ॥
यागमन्दिरगांश्चैव विघ्नानुत्सार्य मन्त्रवित् ॥

---

गुह्यहृन्मुखमूर्धसु । गुह्यशब्देन गुदमे(१)ढ्रान्तरालं लक्ष्यते । (२) [ गु(३)दं गुह्यपार्श्वस्थं मेढ्रं लक्ष्यते ] । मुखशब्देन(४) मुखावयवं ललाटं लक्ष्यते । गुह्यहृन्म(५)खमूर्धसु चतुर्षु (६)स्थानेषु विद्यान्यासेन (७)विद्यायाः सौभाग्यविद्यायाः बीजचतुष्टयन्यासेन । पिण्डं कुण्डलिनी । पिण्डशब्देन कुण्डलिनीस्थानं गु(८)दमेढ्रान्तरकन्दो लक्ष्यते । [ रूपपदेऽपि व्यत्ययो ज्ञेयः । पदं हंसः । पदशब्देन हंसस्थानं हृदयं लक्ष्यते । रूपं बिन्दुः । रूपशब्देन बिन्दुस्थानं ललाटं लक्ष्यते(९) । ] ग्रन्थिशब्देन यत्र विश्वं सूत्रे मणिरिव ग्रथ्यते तद्विश्वमूलं ब्रह्मरन्ध्रं चिन्मयं लक्ष्यते । (१०)एतच्चतुष्टयभेदाद्विघ्नभेदनम् । कोऽर्थः ? गुह्यादिस्थानचतुष्टयेषु(११) विद्याबीजचतुष्टयन्यासेन ।

पातालादिषु लोकेषु ये विघ्ना भेदलक्षणाः ।

---

[१] 'मेढ्रान्तरं' ख० ।
[२] 'इति पदान्तरम्' इत्यधिकं क० ।
[३] कंसान्तर्गतो ग्रन्थो नास्ति ख० ।
[४] 'मूमावयवो' ख० ।
[५] 'मध्य' क० ।
[६] 'स्थानेषु' नास्ति ख० ।
[७] 'सौभाग्यविद्याबीजचतुष्टयन्यासेन' ख० ।
[८] 'गुदमेढ्रान्तरं कन्दं लक्ष्यते' क० ।
[९] कंसान्तर्गतं नास्ति क० ।
[१०] 'ए' नास्ति ख० ।
[११] 'षु' नास्ति ख० ।

पार्ष्णिघातेन भौमांश्च तालेन च नभोगतान् ॥ ९५ ॥
अस्त्रमन्त्रेण (१)विद्याश्च दृष्ट्या विघ्नानपोहयेत् ॥

इत्यभियुक्तवचनोक्तरीत्या पाताळादि(२)रूपाणि पिण्डपदरूप(३)ग्रन्थिस्थानि गु(४)दहृदयललाटब्रह्मरन्ध्राणि भेदलक्षणानि भित्त्वा त(५)दूर्ध्वं ज्वलन्ती ततश्चिन्मयाद्वयपदविश्रान्तिरान्तरो विघ्ननिरास इत्यर्थः । एतेन सर्वमपि बाह्यपू(६)जान्तं अन्तः कुर्यादिति उपलक्ष्यते ।

अन्तर्यागे(७) देहस्यैव यागगृहत्वात्तदन्तर्विघ्नान्निरस्य बहिर्यागमन्दिरगतानां(८)विघ्नानामुत्सारणं कुर्यादित्याह-यागमन्दिरेति ।

अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते (९)नश्यन्तु शिवाज्ञया ॥

"हुं(१०) अस्त्राय फट्" इति मन्त्रेण मन्त्रवित् साधको निर्गच्छतां वि(११)घ्नानां निजनामाङ्कमङ्को(१२)चतो मार्ग

(१) 'दृष्ट्या च दिव्यान्विघ्ना०' ख० ।
(२) 'रूपेण' ख० ।
(३) 'रूपरूपातीतस्थाना०' ख० ।
(४) 'कन्दहृदय०' ख० ।
(५) 'तदूर्ध्वं तदतीतचिन्मयाद्वयविश्रान्तिर्निवास इत्यर्थः' ख०
(६) 'पूजानन्तरमपि कुर्यादित्युपलक्ष्यते' ख० ।
(७) 'अन्तर्यागगृहस्यैव यागगृहान्तरत्वात् तदन्तर्विघ्न०' ख० ।
(८) 'मन्दिर' नास्ति ख० ।
(९) 'गच्छन्तु' ख० ।
(१०) 'हः' ख० ।
(११) 'विघ्नसङ्घानां' ख० ।
(१२) 'सङ्कोचात्' ख० ।

दिक्ष्वधोर्ध्वं (१)महावह्निप्राकारं परिभावयेत् ॥ ९६ ॥

सामान्यार्घ्येण देवेशि ! मार्तण्डं परिपूजयेत् ॥

---

दत्त्वा उत्सार्य ।

भूमिगतान्नभोगतान् विघ्नांश्च विघ्नानुत्सारयेद इत्याह—पार्ष्णिघातेनेति ।

[पा(२)र्ष्णिघातेन पार्ष्णिघातत्रयेण । भौमान् भूमिष्ठान् विघ्नान् । अस्त्रमन्त्रेणेति सर्वत्रानुवर्तते । तालेन करतालत्रयेण । नभोगतान् अन्तरिक्षगतान् विघ्नान् दृष्ट्या वीक्षणेन विघ्नांश्च विघ्नान् । ] अपोहयेत् निःसारयेत् ।

निर्ग(३)तानां विघ्नानां पुनरप्रवेशाय वन्हिप्राकारभावनामाह—दिक्ष्वधोर्ध्वमिति ।

संविदग्नौ महासारे विमर्शैकशरीरिणि ।

भेदाभासमिदं हव्यं जुहोम्यपुनरुद्भवम् ॥

इत्यभियुक्तवचनोक्तरीत्या स(४)र्ववस्तुतत्परसंविदेव महावन्हिः स एव प्राकारः दुर्लङ्घ्यत्वात्सर्वतो दिक्षु परिस्फुरदद्वयपरसंविदात्मकमहावान्हिप्राकारपरिकल्पनाभावनया भेदप्रतीतिलक्षणानां विघ्नानामप्रवेश इत्यर्थः ॥९४–९६॥

सूर्यपूजामाह—सामान्यार्घ्येणेति ।

सामान्यार्घ्यं विशेषार्घ्यं च (५)वक्ष्यते । [प्र(६)काशस-

---

(१) 'ततो वह्नि०' ख० ।

(२) कंसान्तर्गतो ग्रन्थो नास्ति ख० ।

(३) 'निगच्छतां' ख० ।

(५) 'सर्वस्फुरितपरसंविदेव' क०

(५) 'लक्ष्यते' क० ।

(६) कंसान्तर्गतमधिकं क० ।

प्रकाशशक्तिसहितमरुणाकल्पमुज्ज्वलम् ॥ ९७ ॥

ग्रहादिपरिवारश्च विश्वतेजोऽवभा(१)सनम् ॥

---

क्तिसहितश्च]। प्रकाशशक्तिसहितः प्रकाशः परमशिवः, शक्तिर्विमर्शाख्या तया सहितो नित्यसमवेतः ।

स्वप्रकाशशिव एव भास्कर-
स्तद्विमर्शविभवो मरीचयः ।
यैः स भासयति वेद्यमण्डलं
तस्य पूजनमहन्तया मतिः ॥

इ(२)त्यभियुक्तवचनोक्तरीत्या सर्वं सामान्यार्घ्येण स्वात्माहम्भावभावनालक्षणया पूजया भावयेदित्यर्थः । बाह्यार्थस्तु(३) स्पष्ट एव ।

अस्यैव गुणाधिक्यमाह—अरुणेति ।

स्वसंवित्त्रिपुरा देवी लौहित्यं तद्विमर्शनम् ।

इति प्रामाणिकवचनोक्तरीत्या (४)विमर्शविभवविविधारुणभूषणम् । उज्ज्वलं उदयास्तमयरहितत्वात् ॥ ९५–९७ ॥

ग्रहादीति ।

ग्रहादिपरिवारं च (५)विषयान् । (६)गृह्णन्तीति

(१) 'तेजोऽवभासकम्' ख० ।

(२) 'इत्यस्मदुक्तरीत्या' ख०। वस्तुतस्तु 'इत्यस्मद्गुरूक्तरीत्या' इत्यपेक्ष्यते ।

(३) 'तु' नास्ति ख० ।

(४) 'विमर्शविधारणम्' । ख० ।

(५) 'च' नास्ति क० ।

(६) 'गृणातीति' ख० ।

सौम्याग्नेययुतैर्देवि ! रोचनागरुकुङ्कुमैः ॥ ९८ ॥
मूलमुच्चारयन् सम्यग्भावयेच्चक्रराजकम् ॥

---

ग्रहाः इन्द्रियाणि । तेषामादि मनः, तत्परिवारं च विविधविषयग्रहलक्षणसङ्कल्पप्रत्ययप्रवाहप्रवर्तकमित्यर्थः । अत्रोपानिषत्—"धियो यो नः प्रचोदयात्" इति । विश्वतेजोऽवभासकं, "तदेव (१)ज्योतिषां ज्योतिः" (२)इत्युपनिषदुक्तरीत्या (३)बाह्यतेजोगणप्रतीतिकारणनिजस्फुरणम् । बाह्यार्थस्तु सोमादयोऽत्र(४) ग्रहाः । सूर्यस्य प्रधानत्वादादिशब्दात् षडङ्गानि गृह्यन्ते । स्पष्टमन्यत् ।

बाह्यचक्रोद्धारमाह—**सौम्येति** ।

सौम्यं कर्पूरं, सोमनामवाच्यत्वात् । आग्नेयं काश्मीरं, [(५)अग्निशिखासंज्ञकत्वात् । ] "काश्मीरजन्माग्निशिखम्" इत्यमरः । रोचना (६)गोरोचना, अगरुः कालागरुः, कुङ्कुमं घुसृणं, (७)एतैः सुधया पङ्कीकृत्य तेन स्वर्णादिमये पट्टे (८) हेमसूच्या विलिख्य । मूलं सौभाग्यविद्यां । उच्चारयन् परेण चेच्चक्रं लेखयति, स्वयं चेल्लिखति तदोच्चरन् । चक्रा-

(१) 'तदेवान्तरं ज्योतिः' ख० ।
(२) 'इति श्रुत्युक्तरीत्या' ख० ।
(३) 'तेजोगुण' ख० ।
(४) 'अत्र' नास्ति ख० ।
(५) कंसान्तर्गतं नास्ति ख० ।
(६) 'गोरोचनम्' क० ।
(७) 'एतैतेपंकुरव्यात्यायाकीरुतस्वर्णा०' ख० ।
(८) 'पट्टे' नास्ति क० ।

योगिनीमूलमन्त्रेण क्षिपेत् पुष्पाञ्जलिं ततः ॥ ९९ ॥
मणिमुक्ताप्रवालैर्वा विलोमं मूलविद्यया ॥

---

जं चतुराम्ना(१)यमयत्वात् (२)सर्वपूजाचक्रेभ्योऽप्युत्तमं सम्यक् ।

समत्रिकोणशक्त्यग्रं समरेखं मनोहरम् ।

इत्यभियुक्तवचनोक्तरीत्या भावयेल्लिखेत् (३)लेखयेद्वा । तदुक्तमभियुक्तैः—'कस्तूरीघुसृणेन्दुचन्दनसुधाभिश्चक्रराजं लिखेत्' इति (४) ।

योगिनीति ।

योगिनीनां प्रकटादीनां मूलमन्त्रेण 'समस्तप्रकट'—इत्यादिपूर्वोक्तेन पुष्पाञ्जलिम् । ततः श्रीचक्रे निक्षिपेत् ॥९८–९९॥

(५)पुष्पादीनामभावे(६)ऽपि कार्यतामाह—मणिमुक्तेति ।

विलोमं प्रतिलोमम् । (७)उच्चारितमूलविद्यया सौभाग्यविद्यया वा । (८)वाशब्दः काका(९)क्षिवदुभयत्रापि

---

(१) 'चतुराम्नायत्वात्' क० ।
(२) 'तत्सर्वं' ख० ।
(३) 'लेखयेच्च' ख० ।
(४) 'तत्र' इत्यधिकं क० ।
(५) 'पुष्पाणामभा०' ख० ।
(६) 'ऽपि कार्यतामाह' इति नास्ति क० ।
(७) 'उच्चरितया सौभा० ख० ।
(८) 'वा' नास्ति क० ।
(९) 'काकाक्षिवदुभयत्र संयुज्यते' ख० ।

अशून्यं स(१)र्वदा कुर्याच्छून्ये विघ्नास्त्वनेकशः॥१००॥
श्रीचक्रस्यात्मनश्चैव मध्ये त्वर्घ्यं प्र(२)तिक्षिपेत् ॥

---

सम्बध्यते । अशून्यं अविरहितम् । (३)सर्वदा येन केन प्रकारेण कुर्यात् । पुष्पाणामभावे मण्यादिभिर्वा योगिनीमूलमन्त्रेण सौभाग्यविद्यया वा (४)सर्वदा अशून्यं चक्रं कुर्यात् पूजयेदित्यर्थः ।

[ (५)तथाऽकरणे निष्फलतामाह ]—शून्ये इति ।

मण्यादिभिः शून्ये सति श्रीचक्रे ऽने(६)कशः बहुशः विघ्नाः सपर्यान्तरायाः सम्भवेयुः ॥१००॥

सामान्यार्घ्यविधानमाह—श्रीचक्रस्येति ।

श्रीचक्रस्य पूर्वोक्तरीत्या उद्धृतस्य, साधकस्य च मध्ये अर्घ्यं वक्ष्यमाणरीत्या (७)प्रतिक्षिपेत् [ (८)प्रतिष्ठापयेत् ) ] ।

अर्घ्यप्रतिष्ठा(९)प्रकारमाह—चतुरस्रान्तरालस्थेति ।

चतुरस्रान्तरालस्थकोणषट्के आदौ चतुरस्रं लिखित्वा तदन्तर्वृत्तं तदन्तः षट्कोणं तन्मध्ये त्रिकोणमिति मण्डलं गोम-

---

(१)'सर्वथा' ख० ।
(२) 'प्रतिष्ठयेत्' ख० ।
(३) 'सर्वथा एकेनापि प्रकारेण' ख० ।
(४) 'सर्वथा अशून्यं चक्रं पूजयेदि०' ख० ।
(५) कंसान्तर्गतं नास्ति क० ।
(६)'ऽनेकशो विघ्ना बहवो विघ्नाः' ख० ।
(७) 'प्रतिष्ठयेत्' ख० ।
(८) 'कंसान्तर्गतं' नास्ति ख० ।
(९) 'प्रकार' नास्ति ख० ।

चतुरस्रान्तरालस्थकोणषट्के सुरेश्वरि ! ॥ १०१ ॥
षडासनानि सम्पूज्य त्रिकोणस्यान्तरे पुनः ॥

---

योपलिप्तभूतले मत्स्यमुद्रया विलिखेदिति सामर्थ्या(१)ल्लभ्यम् । तदुक्तं श्रीपराक्रमे—

ततो गोमयसंलिप्ते चतुरस्रभुवस्थले ।
भवह(२)ब्र्वासहस्तेन कृतया मत्स्यमुद्रया ॥
दिव्यगन्धं तुलययुक्तं विलिखेदर्घ्यमण्डलम् ।
वेदास्रवृत्तषट्कोणं त्रिकोणान्यन्तरेऽन्तरे ॥

(३)एवं चतुरस्रवृत्तान्तरालकोणषट्के ॥१०१॥

षडासनानीति ।

षडासनानि(४) सम्पूज्य । अमृतार्णवपोताम्बुज आत्मचक्रमन्त्रसाध्यासिद्धासनानि सम्पूज्य । षट्कोणान्तरस्थत्रिकोणमध्ये का(५) कामगिरिपीठं, पू (६) पूर्णगिरिपीठं, जा(७) जालन्धरपीठं, ओ(८) ओड्याणपीठं (९)क्रमात् । त्रिचतुरस्त्री(१०)न्वा चतुरो वा । त्रिकोणकोणेषु

---

(१) 'सामर्थ्यलभ्यम्' ख० ।
(२) 'द्धाम' इति क० पु० पाठान्तरमपि ।
(३) 'इति' ख० ।
(४) 'षडासनानि सम्पूज्य' क० ।
(५) 'का' नास्ति ख० ।
(६) 'पू' नास्ति ख० ।
(७) 'जा' 'नास्ति ख० ।
(८) 'ओ' नास्ति ख० ।
(९) 'इति' क० ।
(१०) 'त्रिचतुरस्त्रीन्वा चतुरो वा' नास्ति ख० ।

पीठा(१)नि चतुरो देवि ! कापूजाओ इति क्रमात्॥१०२॥
अर्चयित्वाऽर्घ्यपादे तु वह्नेर्दशकला यजेत् ॥

---

चतुरस्रे (२)तन्मध्ये चार्चयित्वा तत्राधारं प्रतिष्ठाप्य अर्घ्यपाद(३)माधारं तस्मिन्मध्ये (४)वह्निबिम्बं अभ्यर्च्य तत्परितः कलाश्चाभ्यर्चयेत् । तदुक्तं स्वच्छन्दसङ्ग्रहे—

षट्कोणान्तत्रिकोणे तु वह्निबिम्बं कलायुतम् ।
आवाह्याधारतो देवि ! पूजयेन्मन्त्रवित्तमः ॥ इति (५) ।

क्रमात् यादिक्षान्तदशवर्णपूर्वास्तस्य (६)वह्नेर्दश कला धूम्रार्चिराद्या यजेत् । तदुक्तं स्वच्छन्दसङ्ग्रहे—

यादिक्षान्ता(७)त्मवर्णानि कला वह्नेर्महेश्वरि ! ।
एताः कलाः समभ्यर्च्य स्वस्ववर्णैर्यथाविधि ॥
स्वबीजाद्याश्चतुर्थ्यन्तनाममध्या नमोन्तिकाः (८) ।
प्रोक्ता वह्निकला मन्त्रनामानि शृणु साम्प्रतम् ॥
धूम्रार्चिर्नीललक्ता च कपिला विस्फुलिङ्गिनी(९) ।

---

(१) 'पीठांस्त्रिचतुरो' क०

(२) 'चतुरस्रे तन्मध्ये चार्चयित्वा' इत्यत्र 'त्रयं मध्ये क्रमर्चयित्वा' ख० ।

(३) 'अर्घ्यपादे आधारे' ख० ।

(४) 'तन्मध्ये' ख० ।

(५) 'इति' नास्ति क० ।

(६) 'तस्यैव' ख० ।

(७) 'यादिक्षान्तानि' ख० ।

(८) 'नमोऽन्तिमाः' ख० ।

(९) 'विस्फुलिङ्गिणी' क० ।

अर्घ्यपात्रं प्रतिष्ठाप्य तत्र सूर्यकला यजेत् ॥१०३॥
पात्रे सूर्यकलाश्चैव कभादिद्वादशार्चयेत् ॥

ज्वालामालिन्यर्चिष्मती तदूर्ध्वं हव्यवाहिनी ।
अष्टमी कव्यवाहा च रौद्री संवाहिनी (१)तथा ॥
[ धू(२)म्रार्चिरूष्टया ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्रीः सुरूपा कपिला हव्यकव्यवहेश्वरी ॥
इति तन्त्रान्तरे ] ॥१०२-१०३॥

पात्रे इति ।

पा(३)त्रे अर्घ्यपात्रमध्ये । सूर्यबिम्बमभ्यर्च्य । तदुक्तं स्वच्छन्दसङ्ग्रहे—

अ(४)प्रक्षालितं शङ्खं स्थापयित्वा तथोपरि ।
हृदयात्सूर्यबिम्बं च समावाह्य स्व(५)मन्त्रतः ॥
कादिठान्तं भादिडान्तं वर्णजातं क्रमोऽक्रमात् ।
द्वयं द्वयं प्र(६)योक्तव्यं कलाश्च तदनन्तरम् ॥

इत्यस्मद्गुरुक्तरीत्या कभादि ककारभकारादि व(७)र्णयुगलं द्वादशादिसकलाः । क्रमात्तपिन्याद्याः द्वादशार्चयेत् । तदुक्तं स्वच्छन्दसङ्ग्रहे—

कादिठान्ताक्षरा देवि ! मूर्तिनाम्ना समीरिताः ।

(१) 'संहारिणी ततः' ख० ।
(२) कंसान्तर्गतो ग्रन्थः ख० पु० नास्ति ।
(३) 'पात्रमभ्यर्च्य पात्रमध्ये' ख० ।
(४) 'अथ प्र०' ख० ।
(५) 'च मन्त्रतः' ख० ।
(६) 'च वक्तव्यम्' ख० ।
(७) वर्णयुग्मयुक्तद्वाद०' ख० ।

त्रिधृते तु पुनर्द्रव्ये षोडशेन्दुकला यजेत् ॥ १०४ ॥

तपिनी तापिनी चैव शोधनी शोषणी तथा ॥
भ्रा(१)मणी क्लेदिनी चैव वरेण्या कर्षणी तथा ।
सुषुम्ना (२)तृष्टिवाहा च ज्येष्ठा चैव हिरण्यदा ॥
एताः सौरकलाश्चैव व्यु(३)त्क्रमाद्धादिडान्तिमाः ।

कभादिकथनाद्यकारादयो दश (४)वह्निकलाः । अकारादयः षोडश स्व(५)राः सोमकला इति गम्यते । तत्र पात्रे लवङ्गादिभिः सुगन्धिकु(६)सुमैश्च वासितं सलिलमापूर्य तस्मिन्निन्दुमण्डलमभ्यर्च्य । तदुक्तं स्वच्छन्दस(७)ङ्ग्रहे—

एलालवङ्गकङ्कोल(८)जातीफलसुसंयुतान् ।
सुगन्धिकु(९)सुमैर्द्रव्यैः सह तस्मिन् जले क्षिपेत् ॥ इति ।
नवयोनिं समालिख्य पूर्ववज्जलमध्यतः ।
निशुद्धितः समावाह्य चन्द्रमण्डलमर्च(१०)येत् ॥

त्रिधृते इति ।

तस्मिन्त्रिधृते द्रव्ये द्रवे । द्रवात्मकं द्रव्यं विशेषार्घ्यं मद्यं द्रवमयमेव हि । तदुक्तं स्वच्छन्दसङ्ग्रहे—

(१) 'भ्रमणी' ख० ।
(२) 'तुष्टिवाहा' ख० ।
(३) 'व्युत्क्रमात् डादिभान्तिमाः इति' ख० ।
(४) 'वन्हिकला दश' ख० ।
(५) 'स्वरा' नास्ति ख० ।
(६) 'कुसुमैर्वा वासितममृतसलिल०' ख० ।
(७) 'स्वच्छन्दे' नास्ति ख० ।
(८) 'कक्कोलां' ख० ।
(९) 'सुगन्धिकुसुमैर्दिव्यैर्महत्तस्मिन् जलं किरेत्' ख० ।
(१०) 'चतुरस्रे समर्चयेत' ख० ।

अतो हि विशेषार्घ्यस्य साधनं प्रोच्यतेऽधुना ।
आधारपात्रयोश्चैव तयोर्वन्ह्यर्कपूजनम् ॥
सामान्यार्घ्योक्तमार्गेण कृत्वा(१)पूजेत सूर्यके ।
पात्रे त्वासवमापूर्य शिरोमन्त्रेण पूर्ववत् ।

षोडशेन्दुकला यजे(२)दिति । क्रमादकारादिषोडश स्वरादिका अमृतादि(३)काः षोडश कला यजेत् । तदुक्तं स्वच्छन्दसङ्ग्रहे—

आदिकाद्यन्तिकाः सौम्याः कलाः षोडश कीर्तिताः ।
तासां नामानि वक्ष्यामि शृणु सर्वाङ्गसुन्दरि ! ॥
अमृता मानदा पू(४)षा पुष्टिः प्रीतिर्महेश्वरि! ।
रेवती ह्रीमती चै(५)व श्रीः कान्तिश्च सुधा ततः ॥
ज्योत्स्ना हैमवती चैव छाया सम्पूरि(६)ता तथा ।
रामा(७) श्यामा कलानां च नामान्येतानि व(८)ल्लभे ! ॥
अमृतेशीं च तन्मध्ये भावयेच्च नवात्मना । इति ।
लकु(९)लेशं समुद्धृत्य भृ(१०)गुं संवर्तकं तथा ॥
पिनाकिनं च खड्गीशं भुज(११)ङ्गं यावनं तथा ।

---

(१) 'कृतपूजितपूज्यके' ख० ।
(२) 'यजेदिति' नास्ति ख० ।
(३) 'अमृताद्याः' ख०।
(४) 'पुष्टिस्तुतिः' ख० ।
(५) 'दर्वि' ख० ।
(६) 'सम्पूरिणी' ख० ।
(७) 'वामा रामा' ख० ।
(८) 'वस्तुतः' ख० ।
(९) 'अमृतेशीं' ख० ।
(१०) 'भृगुः संवर्तकश्च यः' ख० ।
(११) 'भुजगं वालिनं' ख० ।

अमृतेशीं च तन्मध्ये भावयेच्च नवात्मना ॥
नवात्मना ततो देवि ! तर्पयेद्धातुदेवताः ॥ १०५ ॥
आनन्दभैरवं(१) वौषडन्तेनैव च तर्पयेत् ॥

---

योजयित्वा क्रमेणैव कार्यकारणमस्तकम् ॥
अर्धीशं योजयेदन्ते नवात्मायं समुद्धृतः । इति(२) ।
स्वच्छन्दसङ्ग्रहोद्धृतं नवात्मानम् । तन्मध्ये ते(३)न मन्त्रेण अमृतेशीम् ।

प्रसृतामृतर(४)श्म्यौघसन्तर्पितचराचराम् ।
भवानीं भवशान्त्यै त्वां भावयाम्यमृतेश्वरीम् ॥

इत्यभियुक्त(५)वचनोक्तरीत्यामृतस्राविणीं भावयेत् ।
नवात्मना ततो देवि(६)—इति ।

धातुदेवताः डाकिन्याद्याः । अत्रैवोक्तम्—
विशुद्धौ हृदये नाभौ स्वाधिष्ठाने तु मूलतः ।
आज्ञायां धातुनाथाश्च न्यस्तव्या धातुदेवताः ॥ (यो.हृ.सं.३-३३)
इति नवात्मना पूर्वोक्तेन तर्पयेत् ॥ १०४–१०५ ॥
आनन्दभैरवमिति ।

आनन्दभैरवं चैवका(७)रेण नवात्मनैव आनन्दभैरवं त-

---

(१) 'चैव वौषडन्तेन' ख० ।
(२) 'इति' नास्ति ख० ।
(३) 'अनेन' ख० ।
(४) 'रश्मौघ' क० ।
(५) 'इत्यभियुक्तोक्त्या' ख० ।
(६) 'गौरि !' ख० ।
(७) 'चैव इत्येवकारात्' ख० ।

तदाज्ञाप्रेरितं तच्च गुरुपङ्क्तौ निवेदयेत् ॥ १०६ ॥
तथैवार्घ्यं विशेषेण साधयेत् साधकोत्तमः ॥

---

र्पयेदिति । नत्वात्मानमुच्चार्य "आनन्दभैरवाय वौषट्" इति तर्पयेदित्यर्थः ।

तदाज्ञेति ।

तस्य गुरुरूपिणो भैरवस्याज्ञा(१)प्रेरितमनुज्ञातम् । त(२)च्च द्रव्यं पुनश्च गुरुपङ्क्तौ निवेदयेत् ॥ १०६ ॥

सामान्यार्घ्यप्रकारं(३) विशेषार्घ्येऽप्यतिदिशति–तथैवेति । इति स्पष्टम् ।

एवमर्घ्यशुद्धिं कृत्वा तदनन्तरं गुरून् पूजयेदित्याह–गुरुपादालिमिति ।

गुरूणां परमशिवादिस्वगुरुपर्यन्तानां पादाव(४)लिं पा-(५)दुकापरम्परां दिव्यसिद्धौघ (६)मानवौघत्रयवर्तीमापूज्य स्वशिरस्यर्घ्योदकाक्षतकुसुमैरभ्यर्च्य । शोधितमर्घ्यमाललाटं त्रिरु(७)द्धृत्य महापद्मवनान्तस्थशृङ्गाटोदरवासिने गुरुरूपिणे पूर्वोक्तनिर्वचनाय भैरवाय ददेत् निवेदयेत । तत(८)पुनः॥१०७॥

---

(१) 'भैरवाज्ञाप्रे०' ख० ।
(२) 'तच्च द्रव्यं पुनश्च' नास्ति ख० ।
(३) 'सामान्यार्घ्यप्रकारमेव विशेषार्घ्यस्यासादनमिति' क०. ।
(४) 'पादावलीं' ख० ।
(५) 'पादुका' नास्ति ख० ।
(६) 'सिद्धमा०' ख० ।
(७) 'समुद्धृत्य' ख० ।
(८) 'तत्' नास्ति क० ।

गुरुपादालिमा(१)पूज्य भैरवाय ददेत् पुनः ॥१०७॥
तदीयं शेषमादाय कामाग्नौ विश्वतस्थु(२)षि ॥

---

प्रसादग्रहणमाह—तदीयमिति ।

तदीयं शेषं गुरुदे(३)वतयोर्निवेदितं शेषं द्रव्यमादाय तत्त्वचतुष्टयशोधनमन्त्रैः । "कामो देवः स काम्यत्वात्" इत्यस्मद्गुरू(४)क्तरीत्या विश्वघस्मरकी(५)लाले कामेश्वराख्ये सर्वप्राणिष्वात्मन्यग्नौ। विश्वत(६)स्थुषि विश्वग्रसनशीलं तद्रूपं तेजोमयम्। तत इत्याज्ञावतारोक्तरीत्या विश्वघस्मरकीला(७)लजाले । पादुकां स्वगुरुश्री(८)पादुकां मूलविद्यां (९)सौभाग्यविद्यां च जपन् होमं भेदेन्धनप्रक्षेपलक्षणं समाचरेत् । तदुक्तं श्रीपराक्रमे—

निवेद्य (१०)मस्तकस्थाय गुरवेऽर्घ्यं तदाज्ञया ।
कल्पान्तहुतभुक्कल्पाचिदग्नौ विश्वघस्मरे ॥

---

(१) 'गुरुपादावलिं पूज्य' क० ।
(२) 'विश्वतस्त्विषि' ख० ।
(३) 'गुरुदेवतायाः पीतशेषं द्र०' ख० ।
(४) 'इत्यस्मद्गुक्त०' ख० ।
(५) 'कलापतौ' ख० ।
(६) 'विश्वतस्त्विषि' ख० ।
(७) 'कलाजाले' ख० ।
(८) 'श्री' नास्ति ख० ।
(९) 'सौभाग्यमूलविद्यां' ख० ।
(१०) 'निवेद्यामस्तकं स्वीयगुरोरर्घ्यं' ख० ।

पादुकां मूलविद्यां च जपन् होमं समाचरेत् ॥।१०८॥
महाप्रकाशे विश्वस्य संहारवमनोद्यते ॥

---

मेय(१)राशिमयं हव्यं वासनात्मोपदंशकम् ।
व्यति(२)षङ्गेण स जुह्वन् जपेदात्मानमामृशन् ॥ इति॥१०८॥

ननु कः कामाग्निः, स (३) कुत्र (४) वा निवसति, किं हविरित्यत आह—महाप्रकाशे इति ।

कुण्डली(५)मुखे व्यवस्थिते इति शेषः । अत्र श्रुतिः— "तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" इति । महाप्रकाशे निरिन्धनदीप्ते निर्वाणरहिते प्रमातरि वह्नौ [विश्वसंहारवमनोद्यते(६)] विश्वस्य शिवादि(७)भूम्यन्तस्य संहारे निजकारणतावन्मात्राऽव(८)स्थितौ वमने सर्जने चोद्यते शिवस्याद्यै(९)वेच्छा शक्तिः । [तदुक्त(१०)माज्ञावतारे]—

स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि ।

मनसा सार्धं मरीचिवृत्तीर्जुहुयात् । आन्तरस्य चित्कलस्य

---

(१) 'ज्ञेयरा०' ख० ।
(२) 'एतेषां गणशो जुह्वन्' ख० ।
(३) 'स' नास्ति ख० ।
(४) 'वा' नास्ति ख० ।
(५) 'कुण्डलीमुखे' नास्ति ख० ।
(६) कंसान्तर्गतं नास्ति क० ।
(७) 'शिवादेर्भू०' ख० ।
(८) 'मात्रस्थितौ' क० ।
(९) 'विश्वाद्यैव शक्तिः' ख० ।
(१०) कंसान्तर्गतं नास्ति ख० ।

मरीचिवृत्तीर्जुहुयान्मनसा कुण्डलीमुखे ॥१०९॥

---

मरीचयो(१)ऽक्षाणि(२)बहिरर्थेषु तेषां सञ्चाराः(३) वृत्तयः। तदुक्तं विज्ञानभैरवभट्टारकैः—

तत्र तत्राऽक्षमार्गेण चैतन्यं व्यज्यते प्रभोः। इति।

कोऽर्थः? कुण्डलिन्याः शिखायां महाशून्ये व्यवस्थिते सर्वप्राणिष्वात्मनि प्रकाशलक्षणे कामाग्नौ 'आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन' इति तन्त्रान्तरोक्तरीत्या बहिरर्थेषु प्रसृतचिन्मरीचिरूपाक्षवृत्तिलक्षणं हविस्तेनैव मार्गेणान्तर्मुखतया मनसा सह जुहुयात् इत्यर्थः। तदुक्तं (४)श्रीविज्ञानभैरवभट्टारकैः—

महाशून्यालये वह्नौ भूताक्षविषयादिकम्।
हूय(५)ते मनसा सार्धं स हो(६)मश्चेतनास्रुचा॥ इति।

अयमेवान्तरो होमः। तदुक्तं पद्धतिषु—

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम्॥

आन्तरामेव पूर्णाहुतिमाह—अहन्तेदन्तयोरिति।

---

(१) 'अक्षनिवहः' ख०।
(२) 'बहिः' नास्ति ख०।
(३) 'सवादिकाः' ख०।
(४) 'श्री' नास्ति ख०।
(५) 'वातेन' ख०।
(६) 'महामहिमशालिनि' ख०।

अहन्तेदन्तयोरैक्यमुन्मन्यां (१)स्रुचि कल्पितम् ॥

---

नैदानैस्तर्पणैः सम्यग्विशुद्धैरमृतात्मभिः ।
मद(३)हन्तां करोमीदं विश्वं हव्यपुरःसरम् ॥ १०९ ॥

इत्यभियुक्तवचनोक्तरीत्या अहन्तेदन्तयोरैक्यम् । अहन्ता प्रमाता, इदन्ता प्रमेयं, तयोरैक्यं प्रमाणं तत्रितयसामरस्यात्मकम् ।

विश्वंक्षिप्तपद(४)प्रमेयसुभगां ब्राह्मीं महात्रा(५)ग्भवे
विश्वोत्तीर्णमहाप्रकाश(६)वपुषं शक्तिं (७) च नैसर्गिकीम् ॥
प्रामाण्य(८)प्रवणत्रिशक्तिख(९)चितां मध्ये तु चातुर्दशीं
सञ्चिन्त्याम्ब! समिन्ध(१०)यन्नुभयतो मथ्नामि तन्त्रारणिम्॥

इत्यभियुक्तवचनोक्तरीत्या तन्त्रारणिमथनो( ११ )द्रेकेण सम्भूतं तत्रितयसमष्टिरूपं (१२)वस्तुरूपं वस्तुद्रव्यं तद्रू(१३)पम् । तदुक्तं मुख्याम्नायक्रमे—

---

(१) 'मुन्मनीस्रु०' ख० ।
(२) 'शनैः शनैस्तर्पणैः सं०' क० ।
(३) 'समाहन्तां' ख० ।
(४) 'लसत्' ख० ।
(५) 'महावैभवैः' ख० ।
(६) 'महाप्रमातृवपुषः' ख० ।
(७) 'तु' ख० ।
(८) 'प्रामाण्यप्रणयेन शा०' क० ।
(९) '०तामध्युष्ट्या०' ख० ।
(१०) 'संवित्त्यर्कसमिद्धवस्तुभरितो' ख० ।
(११) 'द्रेकसम्भूतं' ख०
(१२) 'रूपं' नास्ति ख० ।
(१३) 'तद्रूपम्' नास्ति ख० ।

मथनोद्रेकसम्भूतं वस्तुरूपं महाहविः ॥ ११० ॥

---

स्वीकुर्यात्सततं वस्तु यदानन्दसुखं भवेत् । इति ।

महा(१)हविः । यस्मिन् हुते स्वप्रमेयलक्षणे हवि(२)षि प्रमातृलक्षणं ज्योतिर(३)नवरतं प्रज्वलति तन्महाहविः पूर्णाहुति(४)होमः । उन्मन्यां स्रुचि कल्पितम् । उन्मनी नाम(५) समनोर्ध्वे निरस्तकालकलाक्रियादिका पूर्वोक्तलक्षणा सा । स्रुचि तन्मये(६)नाऽमृतेनापूर्य पूर्णाहुतिं जुहुयात् । एवंरूपं हविर्हुत्वा ।

आनन्दं ब्रह्मणो रूपं तच्च (७) देहे प्रतिष्ठितम् ।
तस्याभिव्यञ्जकं द्रव्यं योगिभिस्तेन पीयते ॥

इति प्रामाणिकवचनोक्तरीत्या याव(८)दानन्दाविर्भावो भवति । तदुक्तं विज्ञानभैरवभट्टारकैः—

जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।
भावयेद्भरितावस्थां महानन्दस्ततो भवेत् ॥

कोऽर्थः ? मन्त्रारणिमथनसम्भूतं इदन्ताहन्तासामरस्य(९)रूपं

---

(१) 'इति' नास्ति क० ।

(२) 'हवींषि' क०

(३) 'ज्योतिर्निरन्तरं' ख० ।

(४) 'होमे' ख० ।

(५) 'समनोर्ध्वे'-इत्यारभ्य 'लक्षणा'-इत्यन्तस्य ग्रन्थस्य स्थाने 'पूर्वोक्तलक्षणा सा स्रुगित्युच्यते तस्यां' इति ख० पु० पाठः ।

(६) 'तन्मयेन घृतेन' ख०

(७) 'मोक्षे' ख० ।

(८) 'याव'दित्यादि 'भवती'त्यत्र 'यो भावः तमनुभवेन' इति ख० पु० पाठः ।

(९) 'सामरस्यवस्तुरूपघृतरूपपूर्णाहुतीर्ब०' ख० ।

हुत्वा हुत्वा स्वयं चैवं सहजानन्दविग्रहः ॥
स्वप्रधा(१)प्रसराकारं श्रीचक्रं पूजयेत् सुधीः ॥१११॥

---

मद्यरूपं घृतपूर्णाहुतिं बहुशो हुत्वा परिस्फुरत्परमानन्दो भवेदित्यान्तरपूर्णाहुतिः । अत एव ।

प्रवि(२)ष्टेऽन्तः सिन्धुरसे भेदनिर्हरणात्मके ।

स्थैर्यमे(३)ति चमत्कारं विना विषयसङ्ग(४)तिम् ॥ इति ।

क्रमोदयोक्तरीत्या मनसि (५)स्थिरीभूते बाह्यचक्रार्चनं कुर्यादित्याह—स्वप्रधेति ।

सुधीः सीधुरसपानेन अनन्यविषयासक्तः स्वसंवि(६)न्मात्रस्थिरमनाः। मनसि स्थिरे सति धारणा स्थिरा, तस्यां स्थिरायां तत्र प्रत्ययैकतानता ध्यानम्—इति योगपातञ्जलशास्त्रोक्तरी(७)त्या प्रत्ययैकताननतालक्षणं ध्यानं भवति । विना ध्यानं पूजा निष्फला भवति । अथादावमृतीकृतमासवं शिवादिभ्यो गुरुभ्यः शिवाभ्याञ्च निवेद्य स्वात्माग्नौ हुत्वा ज्वलन्(८) परमानन्दस्थिरधीर्भूयात् इत्यर्थः । स्वप्रधाप्रसराकारः स्वप्रधा

---

(१) 'स्वप्रथा' ख० ।
(२) 'प्रविष्ट उद्यत् श्रीद्युम्नि भेदनिर्हरणात्मकं' ख० ।
(३) 'स्थैर्यं मतेश्च०' ख० ।
(४) 'सङ्गमात् ' ख० ।
(५) 'मनःस्थैर्यं जायते चेत्त०' ख० ।
(६) 'स्वयं चिन्मा०' ख० ।
(७) 'रीत्या' नास्ति ख० ।
(८) 'प्रज्वलत्प०' ख० ।

गणेशं दूतरीं चैव क्षेत्रेशं दूतिकां तथा ॥
बाह्यद्वारे यजेद्देवि! देवीश्च स्वस्तिकादिकाः ॥११२॥

---

स्वसंवित्तस्याः बहिरर्थेषु इन्द्रियद्वारा प्रसरो व्यापारः । तदा(१)-त्मना स्फुरणं । ततस्तदाकारं श्रीचक्रं पूजयेत् । श्रीचक्रं ना(२)-म नान्यत्किञ्चित् । अपि तु स्वसंविद्देवतायाः प्रसररूपान्तः-करणचतुष्टयाव्यक्तमहदहङ्कृतितन्मात्रदशेन्द्रियतद्वृत्ति(३)तद्विषय-तत्पूर्यष्टकषोडशविकारधातुप्रपञ्च एव(४) श्रीचक्रात्मना स्फुर-ति, एता(५)वत् ॥ ११०-१११ ॥

श्रीचक्रपूजामाह—'गणेशम्'इत्यादिना 'चक्रे पूजां वि-धाय' इत्यन्तेनेति ।

श्रीचक्रद्वारशाखयोर्गणेशं तच्छक्तिं दूतरीं क्षेत्रेशं वटुकाख्यं तच्छक्तिं दूतिकां च यजेत् । तदुक्तं सङ्केतपद्धत्याम्—

द्वैताद्वैतमहामोहशर्वरीक्षपणक्षमः ।
भास्वानिव जयत्येको गणेशो दूतरीयुतः ॥
प्रतिभायाः परोल्लासो निशाकर इवाऽपरः ।
दूतीयुक्तः स जयति वटुकस्ताण्डवान्वितः ॥

बाह्यद्वारे इति ।

---

(१) 'तत आत्मना' ख० ।
(२) 'श्रीचक्रं नाम' नास्ति ख० ।
(३) 'तद्वृत्ति' नास्ति ख० ।
(४) 'एव' नास्ति ख० ।
(५) 'एतत्' ख० ।

ततश्चान्तस्त्रिकोणेऽपि गुरुपङ्क्तिं त्रिधा स्थिताम् ॥
तदन्तश्च महादेवीं तामावाह्य यजेत् पुनः ॥ ११३ ॥

---

बाह्यद्वारे श्रीचक्रद्वारबाह्यप्रदेशे । स्वस्तिकादिकाः (१)देवीः सरस्वतीश्रीदुर्गाभद्रकाल्यश्चतस्रः। स्वस्तिका (२)आदिर्यासामिति समासः । स्वाहाशुभङ्करीगौरीलोकधात्रीवागीश्वर्यश्च पञ्च । (३)एतास्ताश्च देवीः । (४)गायका यजेत् । तत्प्रसिद्धं पद्धतिषु ॥ ११२ ॥

तत इति ।

ततः तस्य श्रीचक्रस्य (५) त्रिकोणे त्रिधा स्थितां दिव्यसिद्धमानवौघत्रयवर्तीं गुरुपङ्क्तिं शिवादिस्व(६)गुरुपर्यन्तानां गुरूणां पङ्क्तिः परम्परा तां । अपिशब्दाद्यजेदित्यनुषङ्गः । गुरुपरम्परा गुरुमुखादेव ज्ञातव्या । न लोकतो न च पुस्तके लिखि(७)ता अत्यन्तरहस्यत्वात् ।

तदन्तरिति ।

तदन्तः श्रीचक्रस्य( ८ ) मध्ये बैन्दवाख्ये चक्रे तां । महापद्मवनान्तस्थां ।

---

(१) 'स्वस्तिकाद्याः देव्यः' ख० ।
(२) 'स्वस्तिकास्ता आ०' ख० ।
(३) 'मञ्जगतास्ताश्च' ख० ।
(४) 'गायिका' ख० ।
(५) 'श्रीचक्रस्य अन्तः' इति नास्ति क० ।
(६) 'स्व' नास्ति क० ।
(७) 'लिखनीया' क० ।
(८) 'श्रीचक्रमध्यबैन्दवाख्ये' ख० ।

महापद्मवनान्तस्थां कारणानन्दविग्रहाम् ॥

---

महापद्मवनान्तस्थे वाग्भवे गुरुपादुकाम् ।

इत्यत्रोपपादितरूपां (१)अकुलाधोमुखसहस्रदलं कमलं महापद्मवनम् । मदङ्कोपाश्रयां अनाश्रितस्य(२) स्वप्रकाशात्मनो ममाऽङ्कस्थां । कारणानन्दविग्रहां कारणं (३)नाम हेतुद्रव्यम् । अत्रैव वक्ष्यति—

क्षेत्राणां पतये मह्यं बलिं कुर्वीत हेतुना । इति ।

द्रव्यपानेन तेन य आनन्दः स एव विग्रहः आकारो यस्यास्ताम् । कोऽर्थः ? शोधितामृतीभूतद्रव्यपानपरिस्फुरत्परमानन्दमात्रशरीरामित्यर्थः । भवतीं अनाश्रितां (४)मम देवीं विमर्शात्मिकां । इच्छाकामफलप्रदां इच्छया यत्काम्यते तत्फलं तस्य सर्वस्य दात्रीं ।

महापद्मवनान्तस्थे ! कारणानन्दविग्रहे ! ।
सर्वभूतहिते ! मातरेह्येहि परमेश्वरि! ॥

इति मन्त्रेणावाह्य यजेत् । ननु महापद्मवनान्तस्थामित्यनेनैव अनाश्रितो देवः, अनाश्रिता देवी चाऽत्र चक्रे समावाह्य कामेश्वरीकामेश्वररूपेण पूज्याविति कथमवसीयत इति चेदुच्य-

---

(१)'इत्यत्रोपपादितरूपकुलाधोमुखसहस्रदलकमलमहापद्मवनमध्यस्थां' ख० ।

(२) 'ईश्वरस्य' इत्याधिकं ख० ।

(३) 'नाम' नास्ति ख० ।

(४) 'मम देवीम्' इत्यारभ्य 'सर्वावयवभूषणः' इत्यन्तो ग्रन्थः ख० पु० नास्ति ।

मदङ्कोपाश्रितां देवीमिच्छाकामफलप्रदाम् ॥ ११४ ॥

---

ते—महापद्मवनान्तस्थः सकलागमशास्त्राणां वक्ता देवोऽप्यनाश्रित एव, तच्छक्तिरनाश्रिता अत एव । अन्यथा 'महापद्मवनान्तस्थां मदङ्कोपाश्रयाम्' इति वचनं कथं घटते ? सदाशिवादीनां तु यद्यप्यागमशास्त्रवक्तृत्वमस्ति तथाऽपि महापद्मवनान्तस्थत्वं नास्ति । तदुक्तं स्वच्छन्दसङ्ग्रहे—

अनाश्रितस्य मध्यस्थं व्योमपद्मं सुविस्तरम् ।
असङ्ख्ययोजनायामं तत्र सिंहासनाश्रितः ॥

सूर्यकोट्यर्बुदप्रख्यः शशाङ्ककृतशेखरः ।
पञ्चवक्त्रो दशभुजस्त्रिपञ्चनयनः प्रभुः ॥

सर्वावयवसम्पूर्णब्रह्ममूर्तिः सनातनः ।
सर्वज्ञः सर्वकर्ता च सर्वानुग्रहणे रतः ॥

सर्वरत्नसमाकीर्णः सर्वावयवभूषणः ।
अनाश्रितकला देवी तस्यो(१)त्सङ्गे सदा स्थिता ॥

पञ्चवक्त्रा त्रिनेत्रा च दशबाह्विन्दुशेखरा ।
व्यापिन्यादिचतुष्कं च तादृशं परिकीर्तितम् ॥

पूर्वादुत्तरपर्यन्तं (२)दिग्गतैः सेवकैः शिवः ।
रुद्र(३)कोट्यर्बुदानीकैः स्वसारूप्यैः (४)सशक्तिभिः ॥

---

(१) 'तथोत्सङ्गे कथं' ख० ।
(२) 'निर्याता सेविका शिवा' ख० ।
(३) 'सेविका०' ख० ।
(४) 'च' ख० ।

भवतीं त्वन्मयैरेव नैवेद्यादिभिरर्चयेत् ॥

---

सेवितो (१)लोकनाथैस्तैः सृष्ट्यादीनि करोति (२)सः।
अनाश्रितोऽयं भगवान् पञ्चवक्त्रस्त्रिदृक्तथा ॥
दशबाहुश्चतुर्बाहुर्द्विबाहुश्चैकबा(३)हुकः।
लोका(४)गमादिवक्ताऽसौ देवदेवः सदाशिवः ॥
परापरविभागेन प्रोवाचाऽसङ्ख्यमागमम्। इति।

उत्तरपदेऽप्युक्तम्।

व्योमाम्बुजे सहस्रारे सितकेसरसङ्कुले।
तत्रासीनं महादेवमपृच्छत् कुलनायिका ॥ इति।

भवतीमि(५)त्यत्र त्वन्मयैरेवेति। भवतीं स्वसंविल्लक्षणां। त्वन्मयैरेव।

पञ्चभूतमयं विश्वं तन्मयी (६)सा सदाऽनघे!।
(७)तन्मयी मूलविद्या च तत्तथा (८)कथयामि ते ॥

इति पूर्वोक्तरीत्या [पञ्चभूतानि भवदिच्छाविजृम्भितानि (९)त्वद्रूपाणि]।

---

(१) 'संसेविलोकपालांशस्त्'० ख०।
(२) 'सा' ख०।
(३) 'वक्त्रकः' क०।
(४) 'कौलागमादिवक्तांशादेवमेव' ख०।
(५) 'भवतीमित्यत्राप्यन्वेति' ख०।
(६) 'त्व०' ख०।
(७) 'त्वन्मयी' ख०।
(८) 'तथा च' ख०।
(९) कंसान्तर्गतग्रन्थस्थाने 'पञ्चरूपाणि पञ्चोपचारैरर्चयेत्' इति ख० पाठः।

त्रिकोणे तत्स्फुरत्तायाः प्रतिबिम्बाकृतीः पुनः ॥११५॥

---

पञ्चरूपिणमात्मानं दिव्यैः पञ्चोपचारकैः ।
अर्पयेत्सह गन्धेन पृथिवीं कुसुमेन खम् ॥
धूपेन वायुं दीपेन तेजोऽन्नेन रसं पुनः ।

इति प्रामाणिकवचनोक्तरीत्या[(१)तैरेव नैवेद्यादिभिरर्चये-त् । नैवेद्यादिभिरित्यादिपदेन गन्धपुष्पधूपदीपनैवेद्या गृह्यन्ते ।] सुगन्धवत्पदार्थाऽनुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्ग-न्धसमर्पणम् । (२)सुशब्दवत्पदार्थाऽनुभवेन प्रत्यङ्मुखतया प्रमा-तरि विश्रान्तिः पुष्पसमर्पणम् । (३)सुस्पर्शवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्धूपसमर्पणम् । सुरूपवत्पदार्था-ऽनुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्दीपसमर्पणम् । स्वा-दु(४)रसवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्नैवे-द्यसमर्पणमित्यर्थः । तदुक्तं मुख्याम्नायरहस्ये—

इन्द्रियग्रामसङ्ग्राह्यैर्गन्धाद्यैरात्मदेवताम् ।
स्वाभेदेन(५) समाराध्य ज्ञातुः सोऽयं महामखः ॥

'बहिरपि गन्धपुष्पधूपदीपनैवेद्यानि (६)पृथिव्याकाशवायुतेजः-

---

(१) कंसान्तर्गतग्रन्थस्थले 'नैवेद्ययागम् । कोऽर्थः?' इति ख० पु० पाठः ।

(२)'तत आत्मशब्दाऽनुभवेन' ख० ।

(३) 'सु' नास्ति ख० ।

(४) 'स्वादूपदंशवत्पदार्थाऽनुभवेन' ख० ।

(५) 'स्वभावेन' ख० ।

(६) 'पृथिवीवाय्वाकाशतेजः' ख० ।

तत्तत्तिथिमयीर्नित्याः काम्यकर्मानुसारिणीः ॥

---

सलिलभावनया देव्यै समर्पयेत्' इ(१)त्युपचारोपनिषत् ।

त्रिकोणे इति ।

त्रिकोणे श्रीचक्रस्य त्रिकोणे रेखात्रये तत्स्फुरत्तायाः प्रतिबिम्बाकृतीः ।

गुणाः पञ्चदश प्रोक्ता भूतानां तन्मयी शिवा ।

इत्यत्रैव पूर्वोक्तरीत्या भूतगुणात्मिकायाः पञ्चदशाक्षरश-(२)रीरिण्याः श्रीविद्यायाः । (३)तत्र स्फुरणात् पञ्चदशप्रतिबिम्बरूपाः तत्तत्तिथिमयीः तत्संख्याकप्रतिपदादिति(४)थ्यात्मिकाः । काम्यकर्मानुसारिणीः ।

नवचक्रक्रमो (५)योऽसौ महावश्यादिसिद्धिदः ।

इति सङ्केतपद्धत्युक्तरीत्या बाह्यचक्रार्चनं (६)काम्यकर्म तदनुरूपकरचरणादिमद्रूपधा(७)रिणीः । उत्पत्तिविनाशरूप-(८)रहितत्वान्नि(९)त्यत्वाच्च नित्याः ।

ततः कामेश्वरी नित्या नित्या च भगमालिनी ।

---

(१) 'उपचारोपनिषत्' नास्ति ख० ।
(२) 'पञ्चदशाक्षरशालिन्याः श्री०' ख० ।
(३) 'तत्र' नास्ति ख० ।
(४) 'प्रतिपदादितत्तत्तिथ्यात्मिकाः' ख० ।
(५) 'चक्रमयो योऽसौ' ख० ।
(६) 'काम्यं कर्म' ख० ।
(७) 'धारिण्यः' ख० ।
(८) 'रूप' नास्ति ख० ।
(९) 'रहितत्वान्नित्याः' ख० ।

तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने ॥ ११६ ॥
मातृकास्थूलरूपत्वात्त्वगादिव्यापकत्वतः ॥

---

नित्या (१)क्लिन्नाऽपि च तथा भेरुण्डा वह्निवासिनी ॥
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ॥
ज्वाला मालिनी चित्रा चेत्येवं नित्यास्तु षोडश ।

इति चतुःशतीशास्त्रोक्ताः । पुनःशब्दादर्चयेदित्यनुषङ्गः । तत्रेति ।

तत्र श्रीचक्रे । त्रैलोक्यमोहने चक्रे पूर्वोक्तनिर्वचने चतुरस्रत्रयलक्षणे प्रकटयोगिन्यो यष्टव्याः इत्युत्तर(२)रत्र स्थितेनान्वयः ॥ ११३-११६ ॥

प्रकटशब्दनिर्वचनमाह-मातृका इति ।

मातृकाः (३)परापश्यन्तीमध्यमावैख(४)र्यस्तासु स्थूलमकारादिक्षकारान्तपञ्चाशद्वर्णमयवैखरीरूपम् । तदुक्तं स्वच्छन्दसङ्ग्रहे-'स्थूलपञ्चाशदक्षरम्' इति । तद्रूपत्वात् मातृका(५) स्थूलरूपवैखरीवर्णवर्गाष्टकमयत्वात् सिद्धीनां ब्राह्म्यादीनां च । तदुक्तं चतुःशत्याम्—

---

(१) 'नित्यक्लिन्ना' ख० ।
(२) 'इत्युत्तरस्थितेन' ख० ।
(३) 'मातृकायाः' ख० ।
(४) 'वैखर्यायाः स्थूल०' ख० ।
(५) 'स्थूलरूप' नास्ति ख० ।

योगिन्यः प्रकटा ज्ञेयाः स्थूलविश्वप्रधा(१)त्मनि॥११७॥

---

वर्गानुक्रमयोगेन (२)महासिद्ध्यष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थां महासिद्ध्यष्टकेश्वरीम् ॥ इति ।

त्वगादिव्यापकत्वतः त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रौजसः आदि (३)शब्देन गृह्यन्ते । तद्व्यापकत्वात्त्वगाधार(४)भ्रूमध्यरक्तनितम्ब(६)स्तनमांसनाभिमे(५)दोहृदयास्थिकण्ठमज्जास्यशुक्रनासापुटक्रोधललाटचक्रेषु स्थितत्वाद्ब्राह्म्यादीनाम् । स्थूलविश्वप्रधात्मनि स्थूलत्वकथनात् । अत एव विश्वं प्रकर्षेण (७)धत्ते इति विश्वप्रधा विश्वम्भरा तदात्मनि भूगृहत्रयात्मके त्रैलोक्यमोहने चक्रे स्थितत्वाच्च (८)मातृकास्थूलरूप[त्वाच्च (९)वैखर्यवयवत्वाच्च त्वगादीनां धातूनां]शरीरावयवतया व्यापकत्वात् त्रैलोक्यमोहनचक्रस्य स्थूलविश्वम्भरात्मकत्वाच्च (१०) तदन्तर्गताः सिद्धयो ब्राह्म्याद्याश्च प्रकटा ज्ञेया इत्यर्थः ॥ ११७ ॥

---

(१) 'प्रथात्मनि' ख० ।
(२) 'यस्यां मात्रष्टकं' ख० ।
(३) 'शब्देन' नास्ति ख० ।
(४) 'भ्रूमध्य' नास्ति ख० ।
(५) 'स्तन' नास्ति ख० ।
(६) 'स्नायु' ख० ।
(७) 'दधत' क० ।
(८) 'त्वात् मातृ०' ख० ।
(९) कंसान्तर्गतग्रन्थस्थले 'त्वात्त्वगादिधातूनां' ख० ।
(१०) 'त्वात्तदन्त०' ख० ।

अणिमाद्या महादेवि! सिद्धयोऽष्टौ व्यवस्थिताः ॥
तासु रक्ततरा वर्णैर्वराभयकरास्तथा ॥ ११८ ॥
धृत(१)चिन्तामहारत्ना मनीषितफलप्रदाः ॥
ब्राह्म्याद्या अपि तत्रैव यष्टव्याः क्रमतः प्रिये! ॥११९॥

---

अन्त्यभूगृहनिवासिनीनां नामग्रहणपूर्वकं ध्यानमाह—अणिमाद्या इति ।

अणिमाद्याः (२)'अणिमा पश्चिमद्वारे' इत्यादि चतुःशतीशास्त्रोक्ताः लघिमामहिमेशितावशिता(३)प्राकाम्यभुक्तीच्छाप्राप्तिसर्वका(४)माख्याः सिद्धयस्तत्रादिशब्देन गृह्य(५)न्ते । अष्टौ व्यवस्थिताः अष्ट(६)सिद्धयो निघण्टुप्रसिद्धाः । अत्र तु दशेति तात्पर्यम् ।

वामजङ्घां समारभ्य वामादिक्रमतोऽपि च ।
सिद्ध्यष्टकं न्यसेत्तेषु द्वयं पादतले न्यसेत् । (यो. हृ. सं..)
इत्यत्रैवो(७)क्तत्वात् । महा(८)रत्नं चिन्तामणिः । शेषं स्पष्टम् ।

---

(१) 'धृताचिन्ता' ख० ।
(२) 'अणिमाद्याः' नास्ति ख० ।
(३) 'वशित्व' ख० ।
(४) 'कामाख्यासिद्धयो दशादि०' ख० ।
(५) 'गृह्यन्ते' नास्ति ख० ।
(६) 'अष्टौ सिद्धयो' ख० ।
(७) 'इत्यत्रैवोक्तम्' ख० ।
(८) 'धृतचिन्तामहारत्ना चिन्तामणिः' क० ।

ब्रह्माणी पीतवर्णा च चतुर्भिः शोभिता मुखैः ॥
वरदाऽभयहस्ता च कुण्डिकाक्ष(१)लसत्करा ॥१२०॥
माहेश्वरी श्वेतवर्णा त्रिनेत्रा शूलधारिणी ॥
कपालमेणं परशुं दधाना पाणिभिः प्रिये! ॥ १२१॥
[ऐन्द्री(२)तु श्यामवर्णा च वज्रोत्पललसत्करा] ॥
कौमारी पीतवर्णा च शक्तितोमरधारिणी ॥ १२२ ॥
वरदाभयहस्ता च ध्यातव्या (३)परमेश्वरी ॥

---

ब्राह्म्याद्या इति ।

ब्राह्म्याद्याः 'ब्रह्माणी पश्चिमद्वारे' इति चतुःशतीशास्त्रोक्तास्तत्रैव मध्यचतुरस्रे यष्टव्याः । क्रमतः क्रमेण ॥११८–११९॥

तासां प्र(४)त्येकं ध्यानमाह—ब्रह्माणीति ।

करैरिति शेषः । [शिष्टं (५)स्पष्टम् ] ॥१२०॥

माहेश्वरीति ।

[एकेन (६)पाणिना शूलधारिणी त्रिभिः कपालमेणं परशुं दधाना] ॥१२१—१२२॥

वरदाभयेति ।

---

(१) 'क्षस्रगुज्ज्वला' क० ।
(२) कंसान्तर्गतं नास्ति क० ।
(३) 'च सुरेश्वरी' ख० ।
(४) 'प्रत्येकं' नास्ति ख० ।
(५) कंसान्तर्गतं नस्ति ख० ।
(६) कंसान्तर्गतं नास्ति ख० ।

वैष्णवी श्यामवर्णा च शङ्खचक्र(१)वराभयान् ॥१२३॥
हस्तपद्मै(२)स्तु बिभ्राणा भूषिता दिव्यभूषणैः ॥
वाराही श्यामलच्छायापोत्रि(३)वक्त्रसमुज्ज्वला॥१२४॥
हलं च मुसलं खड्गं खेटकं दधती भुजैः ॥
[ऐन्द्री (४)श्यामलवर्णा च वज्रद्वयलसत्करा] ॥१२५॥
चामुण्डा कृष्णवर्णा च शूलं डमरुकं तथा ॥
खड्गं वेतालकं चैव दधाना दक्षिणैः(५)करैः ॥१२६॥
नागखेटकघण्टा(६)ख्यान् दधानान्यैः कपालकम् ॥

---

स्पष्टम् ।

वैष्णवीति ।

स्पष्टम् ।

ऐन्द्री(७)ति ।

स्पष्टम् ॥१२३-१२५॥

चामुण्डेति ।

वेतालः पिशाचविशेषः । शूलडमरुखड्गवेतालान् दक्षिणैः

---

(१) 'चक्रगदाब्जकान्' ख० ।

(२) 'हस्तपद्मैश्च' ख० ।

(३) 'पोत्र' क० ।

(४) कंसान्तर्गतं नास्ति ख० किन्तु 'कपालमेणं परशुं' इत्यस्याऽनन्तरं 'कौमारी पीतवर्णा च' इत्यस्यादौ ख० पु० वर्तते ।

(५) 'दक्षिणैर्भुजैः' ख० ।

(६) 'मुण्डाख्यं' ख० ।

(७) 'ऐन्द्री इति' इत्यस्य पूर्वं 'करैरित्यर्थः' इत्यधिकं ख० ।

महालक्ष्मीस्तु पीताभा पद्म(१)दर्पणमेव च ॥१२७॥
मातु(२)लुङ्गफलं चैव दधाना परमेश्वरी ॥
एवं ध्यात्वा यजेदेताश्चक्रेशीं त्रिपुरां ततः ॥ १२८ ॥
कर्मेन्द्रियाणां वैमल्यात् करशुद्धिकरी स्मृता ॥

---

करैः नागखेटकघण्टा(३)पालानि वामकरैर्दधानेत्यर्थः ।
महालक्ष्मीरिति ।

स्पष्टम् । ननु मुद्रादशकं किमित्यन्तश्चतुरस्रे पूज्यत्वेन नोक्तम् ? सत्यम्, चतुःशतीशास्त्रे (४)अनुक्तत्वादत्रापि प्राधान्येन नाख्या(५)ताः । किन्तु श्री(६)श्रीचक्रन्यासे—

मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः ।

इति सूचिताः । अतोऽन्तश्चतुरस्रे मुद्रादशकमपि पूजयेत् ।
एवमिति ।

एवमुक्तप्रकारेण । एताः प्रकटयोगिनीः ध्यात्वा, चक्रेशीं त्रिपुरां यजेत् ॥१२६–१२८॥

विद्यादेवतयोरभेदविवक्षया(७) त्रैलोक्यमोहनचक्रे (८)श्रीविद्यानिर्वचनमाह—कर्मेन्द्रियाणामिति ।

---

(१) 'पद्मौ' ख० ।
(२) 'मातुलिङ्ग' क० ।
(३) 'खेटकमुण्डकपालानि' ख० ।
(४) 'शास्त्रेऽप्यनुक्तत्वादत्रैव' ख० ।
(५) 'प्राधान्येनाख्यातव्याः' ख० ।
(६) 'श्री' नास्ति ख० ।
(७) 'च' इत्यधिकं ख० ।
(८) 'मोहनचक्रेशीविद्या०' ख०

का(१)र्यशुद्धिभत्रा सिद्धिरणिमा (२)चात्र संस्थिता॥ १ २ ९॥

---

आत्मतत्त्वगतयोरशुद्धयो-
रत्र कर्मकरणात्मनोर्द्वयोः ।
शुद्धतत्त्वल(३)यभावनामयी
शुद्धिरात्मकरयोः परा मता ॥

इत्यस्म(४)द्गुरूक्तरीत्या आत्मतत्त्वस्याऽशुद्धत्वात् कर्मेन्द्रियाणामात्मतत्त्वान्तःपातित्वात् करयोश्च कर्मेन्द्रियत्वाद(५)शुद्धयोः कार्यकरणात्मनोः करयोः स्वकारणशुद्धतत्त्वाशिवाद्वैतभावनाकरशुद्धिः तत्करीयं । स्मृता निरुक्ता ।

कार्यशुद्धिभवेति ।

कारणात्मपरामृष्टका(६)र्यरूपेण संस्थिताम् ।
करोमि चिन्मयीं शुद्धिं करयोः स्पर्श(७)शोधिनीम् ॥

इत्यभियुक्तवचनोक्तरीत्या कार्यस्य शुद्धिर्नाम कारणतावन्मात्रतया पर्यवसा(८)नम् । 'अणोरणीयान्' इति श्रुत्युक्ताणीयसि कारणे विद्यमानस्यात्मनोऽणिमा सिध्य(९)तीत्यणिमा-

---

(१) 'करशुद्धि' ख० ।
(२) 'तत्र' ख० ।
(३) 'गत' ख० ।
(४) 'इत्यस्मदुक्तरीत्या' ख० ।
(५) 'दशुद्धयोः करयोः कार्ययोः स्वकारणशु०' ख० ।
(६) 'कार्यरूपाङ्गुलिस्थिताम्' ख० ।
(७) 'स्पर्शशोधनम्' ख० ।
(८) 'पर्यवसाना' क० ।
(९) 'सिध्यतीति सिद्धिः' ख० ।

षोडशस्पन्दसन्दोहे चमत्कृतिमयीः कलाः ॥
प्राणादिषोडशानां तु वा(१)यूनां प्राणनात्मिकाः॥१३०॥
बीज(२)भूताः स्वरात्मत्वात् कलनाद्बीजरूपकाः(३) ॥

---

सिद्धिः। सा चात्र त्रैलोक्यमो(४)हनचक्रे स्थितेति तात्पर्यम्॥१२९॥

द्वितीयचक्रे पूजां (५)सवासनामाह–षोडशस्पन्देति।

स्पन्दो नाम परायास्तत्त्वरूपेण प्रसा(६)रः। तदु(७)क्तं परापञ्चाशिकायाम्–

सिसृक्षोः प्रथमस्पन्दः शिवतत्त्वं प्रभोः स्मृतम्।

तेन षोडश स्पन्दाः षोडश विकाराः भूतेन्द्रियमनांसि तेषां सन्दो(८)हः। चमत्कारो नाम(९)तस्मिन् चिदतिशयोदयः। तदुक्तं क्रमोदये–

स्थैर्यमे(१०)ति चमत्कारो विना विषय(११)सङ्गतिम्।

---

(१) 'प्राणानां' ख०।
(२) 'बीजभूतस्व०' ख०।
(३) 'रूपगाः' ख०।
(४) 'मोहने चक्रे' ख०।
(५) 'चक्रे सवासनां पूजामाह' ख०।
(६) 'प्रसरः' ख०।
(७) कंसान्तर्गतो ग्रन्थो नास्ति ख०।
(८) 'समूहः' इत्यधिकं ख०।
(९) 'नाम काश्चिदति०' क०।
(१०) 'मेव' ख०।
(११) 'विषयसङ्गतिम्–इति' क०।

अन्तरङ्गतया गु(१)प्ता योगिन्यः संव्य(२)वस्थिताः ॥ ३१
कामाकर्षणरूपाद्याः सृष्टेः (३)प्राधान्यतः प्रिये! ॥

---

तन्मय्यः भूतेन्द्रियमनः(४)सु चिदनुप्रविष्टाः कलाः षोड(५)श स्फुरन्ति तदात्मिका इत्यर्थः । कलाः षोडशसङ्ख्याकाः (६)कलाभिधानाश्च प्राण आदिर्येषां (७) ते अपानोदानसमाननागकूर्म(८)कृकरदेवदत्तधनञ्जया दश प्रसिद्धाः(९)वायवः,(१०)अन्येष्वागमान्तरेषु मृग्यास्तेषां प्राणनात्मिकाः[सर्वे(११)षां प्राणनात्मिकाः] प्राणादयो ह्येते(१२)तु तेषां प्राणादीनामपि प्राणनात्मिका इत्यर्थः । बीजभूता बिन्दुयुक्तत्वात् स्वराः षोडश अकारादिविसर्गान्ताः । तदात्मकत्वात् कलना(१३)क्रमात् । सबिन्दुकस्वरप्राप्तत्वात् (१४)कलनाद्बीजरूपकाः [स्वस्व(१५)बीज-

---

(१) 'गुप्तयोगि०' ख० ।
(२) 'योगिन्यः संस्थिता मताः' ख० ।
(३) 'सृष्टिमाद्या०' ख० ।
(४) 'भूतेन्द्रियमनांसि' क० ।
(५) 'षोडशधा' ख० ।
(६) 'संख्याकलाभि०' ख० ।
(७) 'येषां प्राणापानव्यानोदा०' ख० ।
(८) 'कृकल' क० ।
(९) 'प्रसिद्धाः' नास्ति ख० ।
(१०) 'वायवः तेषु षडागमा०' ख० ।
(११) कंसान्तर्गतं नास्ति ख० ।
(१२) 'ह्येतत्तु एतेषां' क० ।
(१३) 'कलनात् प्रक्रमात्' ख० ।
(१४) 'प्राप्तत्वात् बीजरूपगः' ख० ।
(१५) कंसान्तर्गतं नास्ति ख० ।

सर्वाशापूरणाख्ये तु चक्रे वामेन पूजयेत् ॥ १३२॥

स्वरूपाः अन्तरङ्गतया षोडशविकाराणां त्वगादिधातुवत्तत्राप्रकटत्वात्तन्मय्यः । ] तन्मया योगिन्यो गुप्ताः (१)संव्यवस्थिताः । अन्तरङ्गतया अन्तरङ्गं अन्तरिन्द्रियं बुद्धिस्तच्चमत्कारमयत्वादेता अन्तरङ्गाः । अत एव गुप्ताः सर्वाशापूरणाख्ये तु (२)चक्रे। योगिन्य इत्यत्र छान्दसत्वाद्द्वितीयार्थे प्रथमा । कामाकर्षणरूपाद्याः(३) 'कामाकर्षणरूपा च' इत्यादिचतुःशती(४)शास्त्रोक्ताः । सृष्टेः (५)प्राधान्यतः सृष्टौ वामचक्रस्यैव प्रधा(६)नत्वादस्यैव चक्रस्य सृष्टिरूपत्वा(७)दतस्ताः योगिनीः वामेन पूजयेत् वामावर्तक्रमेण (८)पूजयेत् । विकाराः षोडश विलासभूताः। प्राणादिषोडशवायूनां जगत्प्रा(९)णनादिशक्त्यात्मिकाः सबिन्दु(१०)षोडशस्वरैः आकलिताः। प्रत्येकं तन्मयीरन्तरङ्गचिदनुप्रविष्टषोडशविकारतया गुप्ताः कामाकर्षिण्याद्याः कलाः सर्वाशापरिपूरके चक्रे वाममार्गेण पूजयेदित्यर्थः॥१३०–१३२॥

---

(१) 'गुप्ताः संस्थिताः' ख० ।
(२) 'तु' नास्ति ख० ।
(३) 'कामाकर्षणरूपाद्याः' नास्ति क० ।
(४) 'चतुःशतिशा०' क० ।
(५) 'सृष्टिप्रा०' ख० ।
(६) 'प्राधान्यात् अस्य चक्रस्य' ख० ।
(७) 'त्वात्ततस्ताः' ख० ।
(८) 'क्रमेणार्चयेत्' ख० ।
(९) 'जगत्प्राणादि' ख० ।
(१०) 'सबिन्दुस्वरैः कलिताः' ख० ।

पाशाङ्कु(१)शधरा ह्येता रक्ता रक्ताम्बरा (२)वृताः ॥
प्राणशुद्धिमयी सिद्धिर्लघिमा भोक्तुरात्मनः ॥१२३॥

---

एतासां ध्यानमाह–पाशाङ्कुशेति ।

स्प(३)ष्टम् ।

तच्चक्रदेवतार्चने (४)सिद्धिमाह–प्राणशुद्धिमयीति ।

'आनन्द(५)वातं सुधया सुतोदकम्' इति श्रुत्युक्तरीत्या विश्वप्रा(६)णनरूपया स्व(७)धया सह [ यदे(८)कमपारगुणः प्राणिति तस्मिन् ] स्वकारणे लयः । प्राणादीनां वायूनां शुद्धिर्नामाऽत्र प्राणशब्दो वायुमात्रोपलक्षणपरः, तेन वायुलयलक्षणायां (९)शुद्धौ मनोलयलक्षणः(१०) समाधिर्भवति । अत(११)स्तदेकरसभूतस्य भोक्तुरात्मनो जीवस्य य(१२)स्तद्गुणो लघिमासिद्धिर्भवति ॥१२३॥

---

(१) 'पाशाङ्कुशकरा एता' ख० ।

(२) 'इति' क० ।

(३) 'स्पष्टम्' नास्ति ख० ।

(४) 'देवतार्चनासिद्धि०' ख० ।

(५) 'आनितवातं स्वधया तदेकम्' क० ।

(६) 'विश्वप्रीणन' ख० ।

(७) 'सुधया' ख० ।

(८) कंसान्तर्गतग्रन्थस्थले 'यदेकरसमयमतः प्राणा एतस्मिन्' इति ख० पु० पाठः ।

(९) 'तु' इत्यधिकं ख० ।

(१०) 'लक्षणा समा' क० ।

(११) 'ततस्तदे०' ख० ।

(१२) 'यद्गुणो' ख० ।

त्रिपुरेशी च चक्रेशी पूज्या सर्वोपचारकैः ॥
[कौलिका(१)नुभवाविष्टभोगपुर्यष्टकाश्रिताः ॥१३४॥
वाग्भवाष्टकसम्बन्धसूक्ष्मा वर्गस्वरूपतः ॥
तास्तु गुप्ततराः सर्वाः सर्वसंक्षोभणात्मके ॥ १३५ ॥

---

त्रिपुरेशीति ।

यादृशैरुपचारैः सर्वै(२)र्गन्धादिभिर्मूलदेवी पूजिता, तादृशैरेवोपचारैः सर्वाशापरि(३)पूरणचक्रे चक्रेशी त्रिपुरेशी पूज(४)नीयेत्यर्थः ।

तृतीयचक्रे पूजां सवासनामाह—कौलिकेति ।

कुलं (५)षड्विंशत्तत्त्वात्मकशरीरम्, तद्विषयानुभवः कृशोऽहं स्थूलोऽहमित्यादि । तेनाविष्टो जीवः । तदाश्रिततया तस्य भोगपुर्यष्टकम् ।

चिन्तिश्चित्तं च चैतन्यं चेतनाद्वयकर्म च ।
जीवः कला च देवेशि! सूक्ष्मपुर्यष्टकं मतम् ॥

इति स्वच्छन्दसङ्ग्रहोक्तरीत्या सूक्ष्मपुर्यष्टकं तदाश्रिताः

---

(१)कंसान्तर्गतग्रन्थस्थले 'प्रकृत्यष्टकरूपस्थाः कवर्गाद्यष्टवर्गगाः। अनङ्गकुसुमाद्यास्तु सर्वसंक्षोभकारके ॥ चक्रे चात्यन्तरक्तत्वादेता गुप्तरा मताः । पाशाङ्कुशधनुर्बाणकरा रक्ताः समर्चयत् ॥' इति ख० पु० पाठः ।

(२) 'सर्वगन्धा०' ख० ।

(३) 'परि' नास्ति ख० ।

(४) 'पूज्येति स्पष्टम्' ख० ।

(५) 'कुलम्' इत्यारभ्य 'रक्तकञ्चुकेति' इत्यन्तं नास्ति ख० ।

अनङ्गकुसुमाद्यास्तु रक्तकञ्चुकशोभिताः]॥
[त्रैणक्रित(१)लसत्केशाश्चापबाणधराः शुभाः]॥१३६॥
तत्तदाकारबुध्यात्मभोग्यभोक्तुर्म(२)हेशितुः ॥

---

तन्मयतया वाग्भवानामैकाराणामष्टकेन सम्बद्धाः। सूक्ष्मवर्ग-वैखरीवर्णाष्टकवर्गम्। तदुक्तं स्वच्छन्दसङ्ग्रहे—

स्थूलं पञ्चाशदाकारं सूक्ष्ममष्टाष्टकं स्मृतम्।

तत्स्वरूपत्वात्तदात्मकत्वाद्गुप्ततरा सूक्ष्मवैखरीवर्णवर्गाष्टक-मयत्वादेता अपि सूक्ष्माः। अतोऽत्यन्तरङ्गतया गुप्ततरा इत्यर्थः। ताः सर्वा अनङ्गकुसुमाद्याः 'अनङ्गकुसमा पूर्व' इत्यादिचतुः-शतीशास्त्रोक्ताः सर्वसङ्क्षोभणाह्वये तृतीये चक्रे अष्टदलकमले पूज्या इति योज्यम्।

तासां ध्यानमाह—रक्तकञ्चुकेति।

स्पष्टम् ॥१३४—१३६॥

तत्तदाकारेति।

इन्द्रियद्वारा बहिर्निर्गत्य तत्तदाकारा तत्तदिन्द्रियार्था-काराकारिता (३)बुद्धिरन्तःकरणपरिणतिस्तदात्मनो भोग्याः शब्दस्पर्शरूपरसगन्धास्तेषां भोक्ता प्रमाता स एव महीशिता भूपतिः क्षेत्रज्ञ इति यावत्। तस्य पिण्डादीनां पिण्ड-पदरूपरूपातीतानां स्थानानां विश्रान्ति(४)रूपातीते तुरीयपदे

---

(१) कंसान्तर्गतं नास्ति ख०।
(२) 'महीशितुः' ख०।
(३) 'कारिता' नास्ति ख०।
(४) 'विश्रान्ती रूपातीतं तुरीयपदं मुक्तिः' ख०।

पिण्डादिपदविश्रान्तिसौन्दर्यगुणसंयुता ॥ १३७ ॥
चक्रेश्वरी बुद्धिशुद्धिरूपा च परमेश्वरी (१) ॥

---

मुक्तिः । अत्र (२)प्रामाणिकवचनम्—

पिण्डे मुक्ताः पदे मुक्ताः रूपे मुक्ताः षडानन ! ।
रूपातीते तु ये मुक्तास्ते मुक्ता नाऽत्र संशयः ॥

सैव सौ(३)न्दर्यं (४)इत्यनित्याशुचिसंसारलक्षणपरमदौर्भाग्यवि(५)दारणानित्यशुद्धपरमप्रेमास्पदसर्वस्पृहणीयपरमाशिवरूपप्रकाशनमेव सौन्दर्यं तदेव गुणस्तेन संयुता तदेकरसतया चक्रेश्वरी सर्वसङ्क्षोभणाख्यतृतीयचक्रेश्वरी । कोऽर्थः ? चिन्मयशब्दादिविषयप्रमातुः क्षेत्रज्ञस्य पिण्डपदरूपरूपातीताविश्रान्तिरूपलक्षणा तत्रितयपुरातनी तदेकरस्यसौन्दर्यशालिनी त्रिपुरसुन्दरी त्रितयचक्रेश्वरीत्यर्थः । बुद्धिशुद्धिरूपा बुद्धिशुद्धिर्नाम विषयसंसर्गं विहाय निर्विकल्पचिदात्मलयस्तद्रूपा । अत एव महिमासिद्धिरूपा बुद्धेरविषयोपरागाच्चिदात्मनो महिमामहिमत्वं (६)सिद्ध्यति । तत्सिद्धिरूपा चक्रेश्वरी सर्वोप(७)चारैः पूर्वोक्तैर्गन्धादिभिः(८)

---

(१) 'परमेश्वरि' ख० ।
(२) 'प्रमाणव०' ख० ।
(३) 'सैवायसौ०' क० ।
(४) 'सुन्दरत्वं अमि०' ख० ।
(५) 'विहाय तस्य नि०' ख० ।
(६) 'महत्त्व' ख० ।
(७) 'सर्वोपचारकैः' ख० ।
(८) 'गन्धादिभिरभ्यर्च्या' ख० ।

महिमासिद्धिरूपा (१)तु पूज्या सर्वोपचारकैः॥१३८॥
द्वादशग्रन्थिभेदेन समुल्लसितसंविदः ॥

---

पूज्या ॥१३७—१३८॥

चतुर्थचक्रे (२)सवासनां पूजामाह—द्वादशग्रन्थिभेदेनेति ।

ग्रन्थिः षट्चक्राणां प्रत्येकं ऊर्ध्वाधोग्रान्थिद्वयमिति द्वादशग्रन्थयः । अत्रैव वक्ष्यति—

द्वादशग्रन्थिभेदेन वर्णानां ह्यन्तरे प्रिये ! ।
य(३)दोल्लसति शृङ्गाटपीठात्कुटिलरूपिणी ॥

इति चतुःशती(४)शास्त्रोक्तरीत्या समुल्लसितायाः उद्गच्छन्त्याः। संविदः कुण्डलिन्याः। द्वादशग्रन्थिभेदेन विसर्गान्तदशावेशाद्विसर्गः षोडशस्वरः। तेन विसर्गशब्देन षोडशसंख्या गृह्यते । अतो विसर्गान्तं षोडशान्तम् ।

यच्छोडशकलाकारं भूतान्तं व्योमगञ्च (५)तत् ।
षोडशान्तमिति ख्यातं व्योमस्थानेन्दुमण्डलम् ॥

इति स्वच्छन्दसङ्ग्रहोक्तरीत्या तदेव । [दशा(६)वेशश्चिद्दीपाकारत्वात्तदावेशस्तत्रासक्तिः ।]

---

(१) 'च' ख० ।
(२) 'पूजां सवासना०' ख० ।
(३) 'यदुल्लसति' ख० ।
(४) 'चतुःशति' क० ।
(५) 'यत्' ख० ।
(६) कंसान्तर्गतग्रन्थस्थाने 'दशा चिदाधारत्वात् तदावेशस्तदापत्तिः' ख० ।

विसर्गान्तदशात्रेशाच्छाक्तानुभवपूर्वकम् ॥ १३९ ॥
उन्मेषशक्तिप्रसरैरिच्छाशक्तिप्रधानकैः ॥

---

तदुक्तमत्रैव—

व्योमेन्दुमण्डलासक्ता सुधा(१)स्रोतस्वरूपिणी ।

शाक्तानुभवपूर्वकं मूले (२)स्थितायाः कुण्डलिन्याः षट्चक्रग्रन्थिसञ्चयभेदक्रमेण व्योमेन्दुमण्डलासक्ति(३)परिकल्पनमेव शाक्तानुभवः । तत्पूर्वकं भाविवर्णोत्पत्तिरिति क्रियाविशेषणम् ॥ १३९ ॥

त्रैलोक्यमोहनादिचक्रत्रये वैखरीमयतावासनामुक्त्वा सर्वसौभाग्यदायकादिचक्रत्रये भूतलिपिमध्यमामय(४)वासनामाह—उन्मेषशक्तीति ।

अकुलसङ्घट्टरूपैरकुलं (५)ब्रह्मरन्ध्राधोमुखसितसहस्रदलकमलं । तत्रस्थोऽकारः—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ॥

इति सङ्केतपद्धत्युक्तरी(६)त्या अकारः परमशिवात्मकोऽकुलशब्देन लक्ष्यते । तेन सङ्घट्टः सम्बन्धः । [तद्रू(७)पैरिच्छा-

---

(१) 'श्रोत' ख० ।
(२) 'मूलोत्थितायाः' ख० ।
(३) 'सक्त' ख० ।
(४) 'मध्यमामयतां वा०' क० ।
(५) 'अकुलं' नास्ति ख० ।
(६) 'पद्धत्युक्तोऽकारः' ख० ।
(७) कंसान्तर्गतो ग्रन्थः ख० पु० नास्ति ।

तदेवाऽकुलसङ्घट्टरूपैर्वर्णचतुष्टयैः ॥ १४० ॥

---

शक्तिप्रधानकैः । इच्छाशक्तिरिकारः । उन्मेषशक्तिप्रसरैः । उन्मेषशक्तिरुकारः ।] तदुक्तं परापञ्चाशिकायाम्--

अनुत्तरेच्छा उन्मे(१)ष आनन्दे(२)षणमूलता ।
क्रियेच्छाज्ञानशक्तीनां सत्ता चोच्छू(३)नता च षट् ॥

कोऽर्थः ? मूलोत्थिताया इच्छाशक्तेः कुलकुण्डलिन्याः अकुलस्थेन अकारेण सङ्घट्टे सति एकारो जायते । त(४)स्यैवोन्मेषशक्तिसङ्घट्टे सति ॐकारो जायते । तयोरेवाऽकुलसङ्घट्टे सति ऐकारौकारौ जाये(५)ते इत्यर्थः । तदुक्तं परापञ्चाशिकायाम्-

अनुत्तरानन्त(६)शक्तिरिच्छाशक्तौ नियोजिता ।
त्रिकोण(७)मथ षट्कोणमिच्छायां रूढिमागता ॥ इति ।
ते एवोन्मेषयोगेन क्रियाशक्ति(८)स्फुटं वपुः ।
उक्तत्रिशक्तिसङ्घट्टत्रिशूलं द्वैतघस्मरम् ॥ इति च ।

मिश्रेच्छाभावितैरपि ।

---

(१) 'उन्मेषा' क० ।
(२) 'आनन्दशन ऊनता' क० ।
(३) 'सत्ताचेच्छूलता वषट् । इति' ख० ।
(४) 'उन्मेषशक्तिरूपायास्तस्या एवाकुलसङ्घट्टे' ख० ।
(५) 'जायेत' क०, 'जायते' ख० ।
(६) 'अनुत्तरानन्द' क० ।
(७) 'त्रिकोणमध्यषट्कोणमिच्छायां रूढमागतम्' ख० ।
(८) 'शक्तौ' ख० ।

वेद्योष्मरूपसाव(१)र्णैर्मिश्रैश्छाभान्वितैरपि ॥

इच्छेषणान्तरारूढाः स्फुटास्फुटजगन्मयाः ।
चत्वारः पर(२)तो वर्णाः षडात्मा(३)नः प्रचोदिताः ॥

इति परा(४)पञ्चाशिकोक्तरीत्या अकुलेषणाभ्यां मिश्रेण भाविताः षंढाः स्थूल(५)वर्णाः तैरपि। तत्र ह्रस्वद्वयमेव ग्राह्यम् । अत एवाऽकुलः। एको वर्णः इच्छात्मके। द्वितीयः उन्मेषोऽपरः। परं(६)षंढह्रस्वद्वयं च एकारैकारौकारौकाराश्चेति नव स्वरा भवन्ति। वेद्योष्मरूपसावर्णैः ।

सत्तावाचिनि बीजे तु शादिमायान्तिमं जगत् ।
विलुप्तप्रत्ययाकारमेतत् सपरिशिष्यते ॥

इति परापञ्चाशिकोक्तिरीत्या वेद्यस्य षट्त्रिंशत्तत्त्वात्मनः। सङ्कल्परूपा ऊष्माणः 'शषसहा ऊष्माणः' इति तन्त्रान्तर-वचनात्। एवम्भूतः स आदिर्यस्य हकारस्य स एव वेद्योष्म-रूपशादिर्हकारस्तदाद्यवर्णैः। अत्रैक आदिशब्दः अध्याहार्यः।

कुलशक्तिसमावेशरूपवर्णद्वयान्वितैः ।

कुलशक्तिः कुण्डलिनी तस्याः समावेशः उदयविश्रान्ति-स्थानद्वयं आधारं ब्रह्मरन्ध्रमयं तद्रूपं वर्णद्वयं लकारवकारात्मकं।

(१) 'शाद्यर्णैः०' क०।
(२) 'पुरतो' ख०।
(३) 'षंढात्मानः' ख०।
(४) 'परा' नास्ति ख०।
(५) 'षडः ऋऌॡवर्णाः' क०।
(६) 'परं' नास्ति क०।

कुलशक्तिसमावेशरूपवर्णद्वयान्वितैः ॥ १४१ ॥
शक्तेः सारमयत्वेन प्रसृतत्वान्महेश्वरि! ॥

---

आधारपङ्कजं पीतं चतुष्पत्रं सुके(१)शरम् ।

इत्यादि 'पार्थिवं पङ्कजं ह्येतत्' इत्यन्तेन स्वच्छन्दसङ्ग्रहोक्तरीत्या आधारपङ्कजस्य पार्थिवा(२)त्मकतया लकारः ।

ब्रह्मरन्ध्रे भ्रुवाद्रूर्ध्वे कुलपद्मं महेश्वरि! ।
श्वेतं सुकेशरोपेतं सहस्रारमधोमुखम् ॥
व्यापिनी के(३)वला शक्तिरमृतौघप्रवर्षिणी ।

इत्यन्तेन स्वच्छन्दसङ्ग्रहोक्तरीत्या अमृतमयो वकारः । एतद्वर्णद्वयान्वितैः । कोऽर्थः ? कुलशक्तेरिच्छात्मिकायाः कुण्डलिन्याः उन्मेषात् षट्चक्रपञ्चगगनद्वादशग्रन्थिभेदक्रमेण अकुलसमावेशात् 'अइउऋऌएऐओऔहयवरल'–इति वर्णचतुर्दशकमुत्पद्यते । तदुक्तमागमान्तरे भूतलिप्युद्धार(४)सङ्ग्रहे–

पञ्च ह्रस्वाः सन्धिवर्णाः द्यौर्वाय्व(५)ग्निजलं धरा । इति ।

तन्मयं चतुर्दशारचक्रमित्यर्थः ॥१४०–१४१॥

सम्प्रदायक्रमायातसौभाग्यदायकशब्दयोर्वासनामाह–शक्तेरिति ।

शक्तेरिच्छाशक्तेः कुण्डलिन्याः सारः प्रसारः पूर्वोक्तरीत्या

---

(१) 'सकेसरम्' ख० ।
(२) 'पार्थिवतया' ख० ।
(३) 'व्यापिनी केवलं शश्वदमृतौघप्रवर्षिणम्' क० ।
(४) 'प्रसङ्गे' ख० ।
(५) 'व्योमेराग्निजलं धरा' ख० ।

सम्प्रदायक्रमायाताश्चक्रे सौभाग्यदायके ॥१४२॥
निरन्तरप्रथारूपसौभाग्यं बलयोगतः ॥

---

अकुलस्थानस्थाऽनुत्तरशिवसंसर्गस्तन्मयत्वेन तदुत्पन्नत्वात् । एते(१)षां वर्णानां तैर्वर्णैः प्रसूतत्वात् सर्वसङ्क्षोभिण्यादिशक्तीनां सम्प्रदायक्रमायातत्वम् ।

सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः ।

इति(२) । पूर्वोक्तरीत्या गुरुमुखादधिगतत्वादेत(३)देव वर्णोत्पत्तेः । आसां च तन्मयत्वम् । (४)अत एव ताः सम्प्रदायक्रमायाता इत्यर्थः । 'अणिमासदृशा(५)स्तास्तु रक्त(६)वर्णैः' इत्यादिपूर्वोक्ता अणि(७)मासिद्धिसदृशरूपाः । सर्वसङ्क्षोभि(८)णीपूर्वाः 'सर्व(९)सङ्क्षोभिणी शक्ति'रित्यादिचतुःशतीशास्त्रोक्ताः । निरन्तरप्रथा शिवाद्वैतभावना सैव सौभाग्यं परमसुभगदरमप्रेमास्पदपरशिवाभेदगोचरत्वात्तदेव बलं शक्तिः

---

(१) 'एतेन' ख० ।
(२) 'इति' नास्ति क० ।
(३) 'त्वाद्वर्णो०' ख० ।
(४) 'च' अधिकं क० ।
(५) 'सदृशीः' ख० ।
(६) 'रक्ततरावर्णैः' ख० ।
(७) 'पूर्वोक्ताणिमासिद्धिसदृशीः ख० ।
(८) 'सर्वसङ्क्षोभिणीपूर्वाः' नास्ति ख० ।
(९) 'सर्वसङ्क्षोभिणी शक्तिः' इत्यत्र 'सर्वज्ञा सर्वशक्तिश्च' इति ख० पु० पाठः ।

अन्वर्थसं(१)ज्ञिके! देवि! अणिमासदृ(२)शाः शुभाः ॥१४३॥
सर्वसङ्क्षोभिणीपूर्वा देहाक्षादिविशुद्धिदाः ॥

---

तद्योगतः अनित्याशुचिरूपपरमदुर्भगसर्व(३)जुगुप्सिततल्लक्षणसंसारपरिपन्थिपरम(४)प्रेमास्पदसर्वस्पृहणीयपरमसुभगपरमशिवाहन्तालक्षणसौभाग्यप्रतिपादनशक्तिसंयोगात् । अन्वर्थसंज्ञके (५)अनुकूलार्थाक्षरशालिनि (६)संज्ञावति सौभाग्यदायके चक्रे सम्पूजयेदित्यनुषङ्गः ।

देहेति ।

देहः षट्त्रिंशत्तत्त्वसमुदायलक्षणः । तच्छब्देन तदहन्ताभिमानिनीप्रमाता लक्ष्यते । अक्षाणीन्द्रियाणि प्रमाणानि । आदिशब्दाद्विषयाः प्रमेयरूपाः गृह्यन्ते । तेषां विशुद्धि(७)श्चिदेकविश्रान्तिः । तस्यां (८)विशुद्धौ यष्टुरीश्व(९)रत्वं स्वातन्त्र्यं (१०)सिद्ध्यति । सा चाऽत्र प्रोक्तरूपे प्रमातृमानमेयलक्षणे पुरत्रये (११)चि-

---

(१) 'संज्ञके' ख० ।
(२) 'सदृशीः' ख० ।
(३) 'जुगुप्साभेदलक्षण०' ख० ।
(४) 'पर' ख० ।
(५) 'संज्ञिके' क० ।
(६) 'शालिसंज्ञा०' ख० ।
(७) 'शुद्धिः विवेकविश्रान्तिः ख० ।
(८) 'शुद्धौ' ख० ।
(९) 'ईशित्वं' ख० ।
(१०) 'स्वातन्त्र्यं' नास्ति क० ।
(११) 'त्रयेऽपि निवा०' ख० ।

ईशित्वसिद्धिरपि च प्रोक्तरूपे पुरत्रये ॥ १४४ ॥
योगादिक्लेशभेदेन सिद्धा त्रिपुरवासिनी ॥

---

न्निवासस्थानत्वात् । अत्रैव वक्ष्यति—

मातृमानप्रमेयाणां पुराणां परिपोषणी । इति ॥१४२–१४४॥

योगादीति ।

योगादिक्लेशभेदेन(१) । 'आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेन, इन्द्रियाणां (२)प्राप्यकारित्वनियमात् । ततोऽप्यर्थसन्निकृष्टेन्द्रियेण' इति तन्त्रान्तरोक्तरीत्या मातृमान-मे(३)येषु तद्रूपेण चिन्मरीचीनां प्रसा(४)रः तत्समवाय (५)योगः स एवा(६)दिक्लेशः । असङ्गाद्वयापरिच्छि(७)न्न-संविदात्मने मानसेन्द्रियाविषयात्मना बहिरुपराग एव हि क्लेशः क्लिष्टत्वम् । तद(८)भेदेन प्रत्यङ्मुखतया तदेकरस्येन परमप्रमा-तृविश्रान्तिरभेदः । तदुक्तं परापञ्चाशिकायाम्—

सर्व(९)संवित्नदीभेदाभिन्नविश्रान्तिभूमये ।
नमः प्रमातृव(१०)पुषे शिवचैतन्यासिन्ध(११)वे ॥

---

(१) 'शब्देन' क० ।
(२) कंसान्तर्गतं नास्ति क० ।
(३) 'प्रमेये' ख० ।
(४) 'प्रसरः' ख० ।
(५) 'तत्समयो योगः' क० ।
(६) 'स चादि०' ख० ।
(७) 'विच्छिन्न' ख० ।
(८) 'तद्भेदेन' ख० ।
(९) 'सर्वचित्तादिकाद्भेदाद्भिन्न०' ख० ।
(१०) 'विधये' ख० ।
(११) 'सिद्धये' ख० ।

एताः सम्पूजयेद्देवि! सर्वाः सर्वोपचारकैः॥ १४५ ॥
सदातनानां नादानां नवरन्ध्रस्थितात्मनाम् ॥

---

स्तोत्रावल्यामपि—

यत्र यत्र मिलिता मरीचयः
तत्र तत्र विभुरेव जृम्भते । इति ।

सिद्धा त्रिपुरवासिनी पूर्वोक्तपुरत्रयविश्रान्तिरूपिणी चतुर्थचक्रेश्वरी । एताः पूज्याः आवरणदेवताः सिद्धिचक्रेश्वरीयुताः सर्वाः सर्वोपचारैर्गन्धादिभिः सम्पूजयेत् ॥१४२॥

पञ्चमचक्रे पूजां सवासनामाह—सदातनानामिति ।

सदातनानां यावच्छरीरभावितानां नादानां अविकृतशून्यस्पर्शनादध्वनिबिन्दुशक्तिबीजाक्षराख्यानां । नवरन्ध्रस्थितात्मनां नवरन्ध्राणि नवाधाराणि सुषुम्नान्तर्गतगगनभा(१)गरूपाणि । [आधार(२)स्वाधिष्ठानमणिपूरानाहततदूर्ध्ववज्रपद्मकण्ठलम्बिकाविशुद्धाज्ञाख्यानि] । तदुक्तं (३)स्वच्छन्दसङ्ग्रहे—

आधारं स्वाधिष्ठानं च मणिपूरमनाहतम् ।
मध्यमं वज्रकण्ठं च लम्बिकां च विशुद्धिकाम् ॥
आज्ञां च (४)नवकं विद्धि षट्चक्राणि (५)त्रिहीनकम् । इति ।

---

(१) 'भासरूपत्वात्' ख० ।
(२) कंसान्तर्गतं नास्ति ख० ।
(३) 'स्वच्छन्दे' ख० ।
(४) 'नवके' ख० ।
(५) 'त्विही०' क० ।

महासामान्यरूपेण व्यावृत्तध्वनिरूपिणी ॥ १४६ ॥
अस्थिरस्थिरवेद्यानां छायारूपैर्दशार्णकैः ॥

---

तेषु स्थितात्मनां तेषां महासामान्यरूपेण महत् आद्यन्तरहितं निर्विशेषध्वनिलक्षणं सामान्यं समष्टिस्तद्रूपेण । व्यावृत्तध्वनिरूपिणी एवं व्यावृत्तो विभक्तो दशधा ध्वनिः तद्रूपिणी अविकृतादिनादमयसूक्ष्ममध्यमारूपिणीत्यर्थः । अस्थिरस्थिरवेद्यानां अस्थिरवेद्यानि कर्मेन्द्रियगोचरतया क्रियारूपाणि वचनादानगमनविसर्गानन्दाख्यानि स्थिरवेद्यानि ज्ञानेन्द्रियगोचराः शब्दस्पर्शरूपरस(१)गन्धाः तेषामस्थिरस्थिरवेद्यानां । छायारूपैः (२)बिम्बप्रतिबिम्बरूपैः । दशार्णकैः (३)टतवर्गद्वयदशार्णैराविःकृता इति शेषः । कुल(४)कौलयोगिन्यः । अत एव कुलस्य देहस्य अवयवभूतानि दशेन्द्रियाणि कुलशब्देनोच्यन्ते, तत्सबन्धा(५)त्तद्ग्राह्यदशविषयाः कौलिका इत्युच्यन्ते, तैर्योगः सम्बन्धः कार्यकारणभा(६)वलक्षणो यासां ताः कुलकौ(७)लयोगिन्यः । ननु (८)भूतालिप्युद्धारक्रमे क्रमप्राप्तौ कवर्गच-

---

(१) 'रस' नास्ति क० ।
(२) 'रूपैः प्रतिबिम्बभूतैः दशा०' ख० ।
(३) 'दशार्णकैराविर्भूता०' क० ।
(४) 'कुलकौलिकयोगिन्यः' ख० ।
(५) 'तत्सम्बन्धात्तत्सङ्ग्राह्या दश०' ख० ।
(६) 'भाव' नास्ति ख० ।
(७) 'कुलकौलिकयोगिन्यः' ख० ।
(८) 'भूतलिपिक्रमेण' ख० ।

कुलकौलिकयोगिन्यः सर्वसिद्धिप्रदायिकाः ॥१४७॥
श्वेता(१)म्बरधराः श्वेताः श्वेताभरणभूषिताः ॥

---

वर्गौ [कथं (२)दतवर्गौ तस्मिन् दशारे व्युत्क्रमेण कथ्येते ? उच्यते] चतुर्दशारदशारद्वयचक्राणां स्थितिरूपत्वाद् भूतलिपेर्मध्यमावयवत्वान्मध्यमायाश्च स्थितिरूपत्वात्स्थितिक्रमोऽयं वर्गव्य(३)-त्ययः । अत एव तत्कारणभूतसूक्ष्ममध्यमात्मना (४)नादमयत्व(५)संज्ञाकथनमस्य चक्रस्य । सर्वसिद्धिप्रदायिकाः(६) सर्वस्य पूर्वोक्तस्य ज्ञानकर्मेन्द्रियविषयजातस्य सिद्धिः प्रतीतिः प्रमातृविश्रान्तिः,तल्लक्षणायाः (७)सिद्धेः प्रदायिकाः ॥१४६-१४७॥

तासां(८) ध्यानमाह—श्वेताम्बरधरा इति ।

स्पष्टम् ।

सर्वार्थसाधकचक्र(९)व्युत्पत्तिमाह—मन्त्राणामिति ।

[सर्व(१०)सिद्धिप्रदायाः 'सर्वसिद्धिप्रदा देवी च' इत्यादि-

---

(१) 'श्वेतावराभयकराः' ख० :

(२) कंसान्तर्गतग्रन्थस्थाने 'अस्मिन् दशारे व्युत्क्रमेणोच्येते' इति क० ।

(३) 'वर्गन्यासः' ख० ।

(४) 'त्मना' नास्ति ख० ।

(५) 'त्व' नास्ति ख० ।

(६) 'प्रदायकाः' क० ।

(७) 'सिद्धेः' नास्ति क० ।

(८) 'आसां' ख० ।

(९) 'चक्रोत्पत्तिमा०' ख० ।

(१०) कंसान्तर्गतं नास्ति ख० ।

मन्त्राणां (१)स्वप्रथारूपयोगादन्वर्थसंज्ञके ॥ १४८ ॥
सर्वसिद्धिप्रदाद्यास्तु चक्रे सर्वार्थसाधके ॥
लोकत्रयसमृद्धीनां हेतुत्वाच्चक्रनायिका ॥ १४९ ॥

---

चतुःशतीशास्त्रोक्ताः । मन्त्राणां पूर्वोक्तनिर्वचनानां मननत्राणवतां स्वप्रथारूपयोगात् स्वस्य शिवात्मनः साधकस्य ]। प्रथा(२) शिवाहम्भावभावना (३)तदेव मननत्राणनं तद्योगादन्वर्थसंज्ञके सर्वार्थसाधकपदा(४)नुकूलार्थवत्संज्ञाशालिनि शिवाहम्भावभावनालक्षणमननात् सर्वेषां (५)स्वस्वसाधकानाम् अर्थं परमप्रयोजनं मोक्षं साधयतीति विशेषात् (६)सर्वार्थसाधकचक्रे संस्थिता इति शेषः ।

स्वनामपदार्थ(७)व्युत्पत्तिपुरःसरमेतच्चक्रे(८)श्वरीमाह—लोकत्रयसमृद्धीनामिति ।

[ (९)लोकयतीति लोकः, लोकनं लोकः, लोक्यत इति लोकः] इति व्युत्पत्त्या लोकत्रयस्य मातृमानमेयलक्षणस्य समृ-

---

(१) 'स्वप्रथामननत्राणयोगा०' ख० ।
(२) 'स्वप्रथा' ख० ।
(३) 'तदेवामननत्राणं त०' ख० ।
(४) 'पदार्थानुकूला०' ख० ।
(५) 'स्वसाध०' ख० ।
(६) 'विशेषात्' नास्ति क० ।
(७) 'र्थवत् उत्पत्ति०' ख० ।
(८) 'चक्रेशीमा०' ख० ।
(९) कंसान्तर्गतस्थले 'लोकयतीति लोकतेऽनेनेति लोक्यत' ख० ।

त्रिपुरा श्रीर्महेशानि ! मन्त्रशुद्धिभवा पुनः ॥
वशित्वसिद्धिराख्याता एताः सर्वाः समर्चयेत् ॥१५०॥
ऊर्ध्वाधोमुखया देवि ! कुण्डलिन्या प्रकाशिताः ॥

---

द्धीनां परिपूर्ण(१)प्रमातृविश्रान्तिलक्षणानां हेतुत्वात्त्रिपुरा(२) श्रीपञ्चमचक्रेश्वरी पूज्येत्यर्थः ।

मन्त्रशुद्धीति ।

मन्त्राणां शुद्धिर्नाम 'अकुले विषुमंज्ञे च' इत्यादिपूर्वोक्तरीत्या उन्मन्य(३)न्तकाललयलक्षणोच्चारणेन । चिन्मयता(४)-भावना तादृशमन्त्रशुद्ध्या स्वसाधकस्य वशित्वं । [सक(५)लजगत्सर्जने रक्षणे संहारे च] स्वायत्तत्वं (६)सिद्ध्यति तादृशपरशिवप्राप्तिः । सा चाऽस्मिन् चक्रे वशित्वसिद्धिरस्ति । एताः सर्वा आवरणदेवताश्चक्रे(७)श्वरीसिद्धिसंयुताः समर्चयेत् ॥१४८–१५०॥

षष्ठचक्रे (८)पूजां सवासनामाह–ऊर्ध्वाधोमुखयेति ।

'ऊर्ध्वाधोमुखया यदोल्लसति' इत्यादिचतुःशतीशा-

---

(१) 'पूर्णपरप्रमा०' ख० ।

(२) त्रिपुरा श्रीः पञ्चम०' ख० ।

(३) 'उन्मनीपर्य्यन्तं कलाबीजलक्षणो०' ख० ।

(४) कंसान्तर्गतस्थाने 'चिन्मय्यन्तर्भावनं मातृमन्त्रशुद्ध्यादौ' इति ख० पु० ।

(५) कंसान्तर्गतस्थले 'सर्वजगत्प्रसवे सर्वजगत्संहारे च' ख०।

(६) 'स्वातन्त्र्यं सिद्ध्यतीति तादृशी परशिवताप्राप्तिः' ख० ।

(७) 'चक्रे श्रीसिद्धिसंयुताः' ख०।

(८) 'चक्रपूजां' ख० ।

कुलेच्छया बहिर्भावात् कादिवर्णप्रथामयी(१) ॥१५१॥
निगर्भयोगिनी वाच्या (२)स्वरूपा वेशरूपके ॥०

---

स्वोक्तरीत्या अकुल(३)स्थपरपुरुषप्राप्तये ऊर्ध्वमुखया पुन अधोमुखया (४)विश्वसृष्टये मूलाधारं प्रविशन्त्या कुण्डलिन्या प्रकाशिताः अभिव्यञ्जिताः कारणे सत्त्वात् कुलेच्छया कुलमुक्त-लक्षणं मातृमानमेयरूपं तवेच्छया तन्निर्माणेच्छया बहि-र्भावात् (५)कादिवर्णप्रथामयी षट्त्रिंशत्तत्त्वसङ्कुलनरूपतत्त्व-त्रयमयमातृमानमेयलक्षणकुलनिर्माणेच्छया (६)अकुलस्थपराशि-वाद्बहिः प्रसृतया समस्तवर्णगार्भिण्या कुण्डलिन्या ककारादिद-शवर्णप्रथारूपा निर्मिता इत्यर्थः। निगर्भयोगिनीवाच्याः निगर्भ-योगिन्य इति (७)वचनाः।

निगर्भो (८)हि महादेवि ! शिवगुर्वात्मगोचरः।

इति पूर्वोक्तरीत्या[(९)ऽद्वैतप्रथालक्षणद्वैतप्रथालक्षणपरप्रमातृयोगो यासां ताः]योगिन्यो विषयेन्द्रियसंसर्गलक्षण(१०)दशेन्द्रियवृत्तयः

---

(१) 'प्रथामयाः' ख०।
(२) 'वाच्याः स्व०' ख०।
(३) 'स्थ'नास्ति ख०।
(४) 'स्वसृष्टये' ख०।
(५) 'कचादि' ख०।
(६) 'अ' नस्ति ख०।
(७) 'इति वचनात्' ख०।
(८) 'निगर्भोऽपि' ख०।
(९) कंसान्तर्गतस्थले 'ऽद्वैतलक्षणपरप्रमातुः योगो आसामि ति' ख०।
(१०) 'लक्षणा दश०' ख०।

सर्वावेशकरे (१)चक्रे सर्वरक्षाकरे पराः ॥ १५२ ॥
सर्वज्ञाद्याः स्थिता (२)एताः सह पुस्ताक्षमालिकाः ॥

---

चिन्मरीचयो निगर्भयोगिन्यः। स्वरूपावेशरूपके स्वरूपस्य साधक-स्या(३)त्मनः प्रमातुरावेशः परशिवोऽहमिति मतिः । आवेशो हि लोके ब्रह्मराक्षसोऽहमितिवत् पराहन्ताप्रथा तद्रूपके तन्निरूपके। अत एव सर्वावेशकरे।

यत्र यत्र मनो याति-इत्यादि ।

तत्रतत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः ।

इति विज्ञानभैरवभट्टारकोक्तरीत्या सर्वत्र (४)तदावेश-तदभेदेन (५)स्फुरणं करोतीति सर्वावेशकरे। चक्रे षष्ठे चक्रे सर्वरक्षाकरे 'काकेभ्यो रक्षतामन्नम्' (६)इतिवत् (७)प्रतिकूलपदार्थादुपहतिपरिहारः । रक्षा नाम सर्वस्माद्भेदप्रपञ्चलक्षणात् परिपन्थिनो रक्षा परशिवाभेदप्रतीतिरूपा तत्करे। पराः पराशिवाद्वैतप्रतिपादनपरत्वादु(८)त्कृष्टाः। सर्वज्ञाद्याः 'सर्वज्ञा सर्वशक्तिः' इत्यादिचतुःशतीशास्त्रोक्ताः स्थिताः ।

तासां ध्यानमाह—एता इति ।

---

(१) 'सर्वरक्षाकरे चक्रे सर्वावेशकरे पराः' ख० ।
(२) 'स्थिताश्चैताः' ख० ।
(३) 'साधकात्मनः' ख० ।
(४) 'सर्वत्र तत्पदावेशस्तद०' ख० ।
(५) 'देन स्वस्यैव स्फु०' ख० ।
(६) 'रक्षतामयमिति' ख० ।
(७) 'तत्प्रति' क० ।
(८) 'परत्वात् सर्व०' ख० ।

मातृमानप्रमेयानां पुराणां परिपोषिणी ॥ १५३ ॥
त्रिपुरामालिनी ख्याता चक्रेशी त्रिपुरमोहिनी ॥

---

पुस्तं पुस्तकं । शिष्टं स्पष्टम् ।

नामव्युत्पत्तिपुरःसरं चक्रे(१)श्वरीमाह—**मातृमानप्रमेयानामिति** ।

[पर(२)संवित्स्पन्दरूपत्वान्मातृमानमेयान्येव पुराणि तेषां पुराणां परिपोषिणी प्रधानेन उपबृंहिणी]। अत एव त्रिपुरामालिनी ख्याता निरुक्ता । चक्रे (३)षष्ठचक्रे। सर्वमोहिनी (४)एतत्कृतमोहवशादेव हि मातृमानप्रमेयरूपा प्रथा। तदुक्तं परापञ्चाशिकायाम्—

स्वांशरूपेषु (५)मानेषु मायासत्त्वविभेदधीः । इति ।
विद्याशक्तिविशुद्धिं च सिद्धिं प्राकाम्यसं(६)ज्ञिताम् ॥
एताः सर्वोपचारेण पूजयेद्देवताः क्रमात् । इति ।

मन्त्राः पुंरूपवाच्याधिष्ठिताः विद्याः स्त्रीरूपवाच्याधिष्ठिताः । अत एव विद्याशक्तेः सौभाग्यविद्यावर्णवाच्यायाः षट्त्रिंशत्तत्त्वमय्या विशुद्धिस्त(७)दतीतपराचिल्लक्षणा तद्रूपाम् ।

---

(१) 'चक्रेशीमाह' ख० ।

(२) कंसान्तर्गतस्थले 'सर्वेषां सर्वप्रथा प्रदानेनोपबृंहिणी' इति ख० पु० पाठः ।

(३) 'चक्रेशी षष्ठचक्रेशी' ख० ।

(४) 'अत एव कृतमोहिनी' ख० ।

(५) 'भागेषु' ख० ।

(६) 'संज्ञिनां' क० ।

(७) 'विशुद्धिस्त्वतीत' क० ।

निरुद्धवायुसङ्घट्टस्फुटितग्रन्थिमूलतः ॥ १५४ ॥
हृदयान्तरसंवित्तिशून्यपुर्यष्टकात्मना ॥

---

प्राकाम्यसंज्ञिकां(१)सिद्धिं कामना(२)रूपलक्षणाम् ।
तदुक्तं महाकविभिः—

द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।
व्यक्तो व्यक्तेतरश्चापि प्राकाम्यन्ते विभूतिषु ॥ इति ।

एता देवताः(३)क्रमात्प्रथमावरणदेवताः पश्चाच्चक्रेशीं ततः सिद्धिमिति क्रमात्स(४)र्वोपचारेण । जातावेक(५)वचनं सर्वो(६)पचारैः पूजयेदित्यर्थः ।

सप्तमचक्रे पूजां सवासनामाह—निरुद्धेति ।

निरुद्धयोः (७)परिहृतस्वैराचारयोः वाय्वोः प्राणापानयोः सङ्घट्टात् ।

गुदमाकुञ्च्य बहुशः प्राणापानौ निरुध्य च ।
संयोज्यते—

इत्यभियुक्तवचनोक्तरीत्या संयोगात् फुटितो ग्रन्थिः सुषुम्नान्तर्गतमूलाधारकमलपर्यन्तं वसन् तादृशं मूलं मूलाधारं । ततो

---

(१) 'संज्ञितां' ख०'
(२) 'कामनाऽनुरूप' ख० ।
(३) 'देवताः सर्वेशाद्याश्चक्रेशीसिद्धिमुद्रायुताः क्रमा०' ख
(४) 'क्रमात् पूर्वोपचारे०' ख० ।
(५) 'जातावेकत्वं' ख० ।
(६) 'सर्वैरुपचा०' ख० ।
(७) 'निरुद्धयोः परिहृत' इत्यारभ्य 'दुर्लक्ष्यत्वाच्छून्यमिति च' इत्यन्तं नास्ति ख० ।

बीजरूपस्वरकलास्पृष्टवर्गानुसारतः ॥ १५५ ॥
रहस्ययोगिनीर्देवीः (१)संसारदलनोज्ज्वले ॥

---

हृदयान्तरसंवित्तिशून्यपुर्यष्टकात्मना 'ध्यायन् भुजगाकृतिं हुङ्कारविह्वलज्योतिः पवनक्षेपमनोभिर्गमयेदूर्ध्वम्' इत्यभियुक्तवचनोक्तरीत्या मूलादुत्थितायाः कुण्डलिनीरूपायाः ।

ततो हृदयपद्मान्तः स्फुरन्तीं सांविदीं कलाम् ।

इत्यभियुक्तवचनोक्तरीत्या हृदयान्तरे स्फुरन्त्याः संवित्तेश्चिदात्मनः ।

चितिश्चित्तं च चैतन्यं चेतनाद्वयकर्म च ।
जीवः कला च देवेशि ! सूक्ष्मपुर्यष्टकं मतम् ॥

इति स्वच्छन्दसङ्ग्रहोक्तरीत्या सूक्ष्मपुर्यष्टकानां सूक्ष्मतया दुर्लक्ष्यत्वाच्छून्यमिति च ।

'हृत्पुण्डरीकं पुरमध्यसंस्थम्' इति (२)श्रुत्युक्तरीत्या पुरं शरीरं चिदष्टकरूपं सूक्ष्मशरीरं शून्यपुर्यष्टकं तदात्मना तद्रूपेण संस्थि(३)ता इत्यनुषङ्गः ।

द्विधेयं मातृका देवी(४) बीजयोन्यात्मना स्थिता ।

इति परापञ्चाशिकोक्तरीत्या [बीजरूपाः (५)स्वराः अ-

---

(१) 'देवि!' ख० ।
(२) 'श्रुत्युक्त्या' ख० ।
(३) 'तद्रूपेण एता इ०' ख० ।
(४) 'देवि' क० ।
(५) कंसान्तर्गतस्थले 'बीजरूपाः आदिस्वराः अकारादिविसर्गान्ताः षोडशस्वरकलाः' इति ख० पु० पा० ।

सर्वरोगहरे चक्रे संस्थिता वीरवन्दिते ! ॥ ११६ ॥
वशिन्याद्या रक्तवर्णा वरदाभयमुद्रिताः ॥

कारादिविसर्गान्ताः कलाः षोडश]ताभिः स्पृष्टाः अवर्णेन सं(१)-युताः वर्गाः कचटतपयशाः तेषां अनुस्वारः ।

अवर्गः प्रथमो देवि! वशिनी तत्र संस्थिता ।

इत्यादिचतुःशतीशास्त्रोक्त(२)त्वात् । 'उद्धरेत् प्रथमं रेफम्' इत्यादिचतुःशतीशास्त्रोद्धृताः । स्वस्वबीजानुसारतः क्रमात् स्वस्ववर्गान्ते स्वस्वबीजमुच्चार्य पूजयेदित्यर्थः । ननु चतुर्दशकोणादि(३)पूर्वचक्रेषु देवतानां मृतालिपिमातृकाव(४)र्णस्वरनवकहादिपञ्चकटतकचवर्गमयत्वमुक्तम् , अष्टकोणादि(५)-देवतानां किमिति [शिष्टप(६)वर्गशषसमयत्वोक्तमिति चेत् सत्यम्, अष्टकोणदेवताबीजमनुक्तमप्यवगन्तव्यम् ।

बीजरूपस्वरकलास्पृष्टवर्गानुसारतः ।

इति तु वशिन्यादिदेवतापूजामन्त्रकथनम् । रहस्ययोगिन्यः (७)सूक्ष्ममन्त्ररहस्यं पुर्यष्टकं तेन सह योगः सम्बन्धः कार्यकारणलक्षणो यासां ताः वशिन्याद्याः योगिन्यः

(१) 'अवर्गेण युताः' ख० ।
(२) 'शास्त्रोक्ताः स्वस्ववर्गान्त उद्धरे०'क० ।
(३) 'पूर्व' नास्ति ख० ।
(४) 'वर्ण' नास्ति ख० ।
(५) 'कोणाधिदेव०' ख० ।
(६) कंसान्तर्गतस्थले 'शिष्टवर्गशषसमयत्वं अष्टकोणादिदेवतानामनुक्तमप्यवगन्तव्यम्' क० ।
(७) 'योगिनीः' ख० ।

पुस्तकं जपमालां(१) च दधानाः सिद्धयोगिनीः ॥१५७॥
शुद्धविद्याविशुद्धिं च भुक्तिसिद्धिं महेश्वरि ! ॥

[(२)सूक्ष्मतया दुर्लक्ष्यपुर्यष्टकमयत्वाद्गोपनीयाः । संसारदळनोज्ज्वले अनित्याशुचिक्लेशरूपभेदः संसारस्तस्य दळने हरणे उज्ज्वले परप्रकाशतावन्मात्रे। अत एव सर्वरोगहरे चक्रे सर्व] एवानित्याशुचिक्लेशरूपसंसारो रोगः तस्य हरणे (३)प्रभावशालिनि सप्तमचक्रे संस्थिता(४)वशिन्याद्याः ।

अवर्गः प्रथमो देवि ! वशिनी तत्र संस्थिता ।
इति चतुःशतीशास्त्रोक्ताः पूजयेदिमतुपक्रमः ।

तासां ध्यानमाह—रक्तवर्णा इति ।

सिद्धः परम(५)शिवः तेन सं(६)योगः सम्बन्धः पुर्यष्टकात्म(७)कतया तस्य जीवत्वा(८)पादनलक्षणास्तद्धतीः (९) । शिष्टं स्पष्टम् ॥१५१-१५७॥

शुद्धविद्येति ।

अहन्तेदन्तयोरैक्यमिति(१०)विद्या निगद्यते ।

---

(१) 'जपमालाक्ष' ख० ।
(२) कंसान्तर्गतस्थले ख० पुस्तके 'अत एव सर्व'इत्यानेव ग्रन्थः।
(३) 'हरणे पटु प्र०' ख० ।
(४) 'संस्थितवशिन्याद्याः' क० ।
(५) 'पराशिवः' ।
(६) 'तेन योगः' ख० ।
(७) 'कात्मतया' ख० ।
(८) 'जीवतापा०' ख० ।
(९) 'तद्धतीम्' क० ।
(१०) 'मति विद्या' क० ।

ईश्वरीं त्रिपुरां (१)सिद्धां पूजयेद्बिन्दुतर्पणैः ॥१५८॥

---

इति परापञ्चाशिकोक्तरीत्या शिवाद्वैतप्रथालक्षणायाः शुद्धविद्यायाः विशुद्धिः ।

ज्ञानेन ज्ञे(२)यमालोक्य पश्चाज्ज्ञानं परित्यजेत् ।

इति (३)प्रतिपादितरीत्या ज्ञातृज्ञानज्ञे(४)यविभागशून्यनिर्विकल्पबोधलक्षणपर(५)मशिवसमावेशस्तद्रूपिणी, अत एव भुक्तिसिद्धिं ।

विश्वं शिवादिभूम्यन्तं चमत्काररसाश्रयम् ।

इत्यभियु(६)क्तवचनोक्तरीत्या महाभुक्तिर्विश्वविषयिणी स्वसाधकस्य सिद्ध्यति । तां चक्रेश्वरीं सप्तमचक्रेश्वरीं त्रिपुरासि-(७)द्धां मातृमानमेयरूपाणां त्रिपुराणां (८)उत्तीर्णपरमशिवल(९)क्षणां सिद्धिं बिन्दुतर्पणैरनामाङ्गुष्ठयोगलक्षण(१०)शिवशक्तिमेलनमुद्रया द्रव्यबिन्दुतर्पणैः साक्षतकुसुमैः पूजयेदिति ॥१५८॥

---

(१) 'त्रिपुरासिद्धिं' ख० ।
(२) 'ज्ञानमा०' ख० ।
(३) 'इति वचनप्रति०' ख० ।
(४) 'ज्ञेय' नास्ति ख० ।
(५) 'परशिव' ख० ।
(६) 'इत्यभियुक्तोक्त्या' ख० ।
(७) 'त्रिपुरासिद्धिं' ख० ।
(८) 'त्रिपुराणां सिद्धिमुत्ती०' ख० ।
(९) 'परम' नास्ति ख० ।
(१०) 'शिवलयलक्षणां' ख० ।
(११) 'लक्षणया' ख० ।

शक्तित्रयात्मिका देवि! चिद्धामप्रसराः (१)पराः ॥
संवर्ताग्निकलारूपाः परमातिरहस्यकाः ॥१५९॥

---

अष्टमचक्रपूजां सवासनामाह—शक्तित्रयात्मिका इति।

शक्तित्रयात्मिकाः इच्छाज्ञानाक्रियात्मिकाः।(२)चिद्धामप्रसराः (३)चिदः संविदः अम्बिकाख्या(४)याः धाम्नां किरणानां अंशानां वामाज्येष्ठारौद्र्यात्मिकानां (५)ओड्डीशषष्ठीश्रमि(६)त्रेशाख्यानां प्रसराः स्पन्दभूताः [ (७)सर्वावरणप्रधानभूतत्वात् ]। संवर्ताग्निकलारूपाः संवर्ताग्निः विश्वघस्मरः (८)परमशिवस्तस्य कला हकारः तद्रूपास्तदात्मिकाः शान्ताशक्त्यवयवभूतत्वात्। परमातिरहस्यकाः परमाः सर्वावरणदेवताभ्यो(९)ऽतिरहस्यकाः मनोबुद्ध्यहङ्काररूपोपाधित्रय(१०)स्फुरत्परचिदाधाररूपत्वादत्यन्तगोपनीयाः। पूर्णापूर्णस्वरूपायाः पूर्णा (११) परशिवसमावेशरूपत्वात्, [ पूर्ण-

---

(१) 'प्रसराः शिवाः' ख०।
(२) 'चिद्धाम' ख०।
(३) 'चिदः' ख०।
(४) 'अम्बिकाख्यादिधाम्नां' ख०।
(५) 'उड्डीश' ख०।
(६) 'मित्रीश' ख०।
(७) कंसान्तर्गतं नास्ति ख०।
(८) 'परशिवोऽस्वरस्तस्य' ख०।
(९) 'देवताभ्यः सर्वाभरणप्रधानरूपत्वात् अतिर०' ख०।
(१०) 'परिस्फुरत्पं० ख०।
(११) 'पूर्णपरशिव' ख०।

पूर्णापूर्णस्वरूपायाः सिद्धेर्हेतुः (१)सुरेश्वरि! ॥
सर्वसिद्धिमयाख्ये तु चक्रे त्वायुधभूषि(२)ताः॥१६०॥

---

स्वरूपा (३)विश्वविषयत्वात्तादृशायाः सिद्धेरुभयात्मिकायाः] सर्वस्य क्षित्यादिशिवान्तस्य (४)पराशिवविश्रान्तिलक्षणायाः सिद्धेः जीवन्मुक्ति(५)हेतुतया। सर्वासिद्धिमयाख्ये निरुक्तसर्वसिद्धिमय(६)नाम्नि। आयुधभूषिताः (७)कामेश्वरीकामेश्वरयो(८)रायुधैः।

शरचापपाशाङ्कुशैरष्टभिर्मिथुनीकृतैः।
पश्चिमोत्तरपौरस्त्यदक्षिणाशाक्रमेण तु॥

इत्यादिचतुःशतीशास्त्रोक्तरीत्याऽलङ्कृ(९)ताश्च। आयुधानां [(१०)कामेश्वरकामेश्वर्योश्चरणान्तःपातित्वं सिद्धम्]। चक्रेऽष्टमे स्थिताः कामेश्वरीपूर्वाः 'कामेश्वरीमग्रकोणे'इति(११)

---

(१) 'हेतुमयेश्वरि'! क०।
(२) 'भूषिते' ख०।
(३) 'कंसान्तर्गतस्थले' 'पूर्णस्वरूपायाः पूर्णत्वं मनुविश्वविषयासिद्धिस्तादृश्याः सिद्धेर्हेतुस्तादात्मिकायाः' ख०।
(४) 'परमशिव' ख०।
(५) 'मुक्तेर्हेतु' ख०।
(६) 'सर्वसिद्धिमयानन्दे' ख०।
(७) 'भूषिते' ख०।
(८) 'आयुधैः' नास्ति ख०।
(९) 'अलङ्कृते आ०' ख०।
(१०) कंसान्तर्गतस्थाने'कामेश्वर्याश्चरणान्तःपातित्वं सिद्धम्'ख०
(११) 'इत्यादि चतु०'ख०।

स्थिताः कामेश्वरीपूर्वाश्चतस्रः पीठदेवताः ॥
आयुधास्त्व(१)तिरक्ताभाः स्वायुधोज्ज्वलमस्तकाः १६१

---

चतुःशतीशास्त्रो(२)क्तरीत्या चतस्रः पीठदेवताः पीठानि 'कापूजाओ इति क्रमात्' इति पूर्वोक्तानि मनोबुद्ध्यहङ्कारचित्तलक्षणानि तेषु सङ्क्रान्ता देवताः परमकाशावयवभूतनामाज्येष्ठारौद्र्याम्बिकामयामित्रे(३)शषष्ठीश(४)ओड्डीशचर्यानाथशिवाङ्कस्थास्तद्वि(५)मर्शशक्त्यंशभूतेच्छाज्ञानक्रियाशान्तामयकामेश्वरीवज्रेश्वरीभगमालिनी(६)श्रीमहात्रिपुरसुन्दर्यश्चतस्र इति। नवमचक्रदेवत(७)या सह सङ्कलनात्। अष्टमचक्रे तु तिस्र एव कामेश्वर्याद्याः सायुधाः।

आयुधदेवतानां ध्यानमाह—आयुधा इति।

आयुधाः आयुध(८)देवताः छान्दसत्वात्पुल्लिङ्ग(९)प्रयोगः। स्वायुधोज्ज्वलमस्तकाः स्वाधिष्ठिताऽऽयुधपरिक(१०)लितमस्तकाः(११)।

---

(१) 'आयुधा अपि' ख०।
(२) 'शास्त्रोक्ताश्चतस्रः' ख०।
(३) 'मित्रीश' ख०।
(४) 'वोड्डीश' ख०।
(५) 'वाङ्कस्थाः तन्नितयशक्त्यवयवभू०' ख०
(६) 'श्री' नास्ति ख०।
(७) 'देवतायाः' क०।
(८) 'आयुधाधिदे०' ख०।
(९) 'पुल्लिङ्गाः आ०' क०।
(१०) 'परिकल्पित' ख०।
(११) 'मस्तकाः' इत्यस्याग्रे 'शिरसः' इत्यधिकं क०।

वरदाभयहस्ताश्च पूज्या व्र(१)ताफलप्रदाः ॥
त्वदीयाश्च मदीयाश्च पुंस्त्रीवश्यविधायिनः ॥१६२॥
त्वगसृङ्मांसमेदोस्थि(२)शुक्लानां च महेश्वरि ! ॥

---

महापद्मवनान्तस्थां कारणानन्दविग्रहाम् ।
मदङ्कोपाश्रयां देवीमिच्छाकामफलप्रदाम् ॥

भवतीम्—

इति पूर्वोक्तरीत्या महापद्मवनान्तस्थानाश्रितेश्वरस्य विश्वगुरोर्ममाङ्कस्थायाः अनाश्रितकलायाः तव सम्बन्धिनो बाणधनुःपाशाङ्कुशाः पुंवश्यविधायिनः तादृश(३)स्य मम सम्बन्धिनो बाणधनुःपाशाङ्कुशाः स्त्रीवश्यविधायिन इत्यर्थः । तदुक्तं चतुःश(४)तीशास्त्रे—

मादनैर्मदनो भूत्वा पाशाङ्कुशधनुःशरैः ।
क्षोभयेत्स्वर्गभूलोकपातालतलयोषितः ॥
तथैव शाक्तैर्देवेशि ! त्रिपुरीकृतविग्रहः ।
क्षोभयेद्देवगन्धर्वसिद्धविद्याधरानपि ॥ इति ।

स्प(५)ष्टम् ॥१५९–१६२॥

चतुः(६)शतीशास्त्रे अनुदूधृतत्वाच्छक्तिबाणात्मबीजान्युद्धरति—त्वगसृगिति ।

---

(१) 'घ्यासृफ०' ख० ।
(२) 'मेदोऽस्थिमज्जार्णान्ताः सुरेश्वरि' ख० ।
(३) 'तादृशाश्च' ख० ।
(४) 'चतुःशति' क० ।
(५) 'स्पष्टमन्यत्' ख० ।
(६) 'पूर्वं चतुःशतीशास्त्रेऽनुदाहृतत्वाच्छक्ति०' ख० ।

द्वितीयस्वरसंयुक्ता एते बाणास्त्वदीयकाः ॥१६३॥
वामादीनां पुराणां तु जननी त्रिपुराम्बिका ॥

---

श्रीकण्ठादिन्यासपरिपाट्याः त्वगादीनां पञ्चानां धातूनां ये वर्णाः पञ्च, एते द्वितीयस्वरसंयुक्ताः बाणाः । आकारो द्वितीयः स्वरः सामर्थ्याद्बिन्दुरपि ल(१)भ्यते । त्वदीयकाः [बाणाः(२) त्वत्सम्बन्धिबाणबीजानि]। तत्र यकारस्त्वगात्मकः, रेफोऽसृगात्मकः, लकारो मांसात्मकः, वकारो मेदस्वरूपः [(३) अस्थिशब्दोपरिस्थितेन शुक्रात्मिकेन स्वकारेणान्वेति]। चतुः(४)शत्यामप्यनुद्धृतानां कामेश्वरबाणबीजानां ।

आदौ पादा(५)त्परेण्याख्यां संयुजेन्मलरक्षये ।

इति स्वच्छन्दसङ्ग्रहोद्धृतत्वादागमान्तरेषु प्रसिद्धत्वान्मात्रोद्धारः क्रियते ॥१६३॥

**वामादीनामिति ।**

वामादीनां वामाज्येष्ठारौद्र्याख्यानां मिश्रे(६)शादिरूपाणां इच्छाज्ञानक्रियात्म(७) कविमर्शशक्त्यंशकामेश्वर्याद्यधिष्ठि-

---

(१) 'लक्ष्यते' ख० ।

(२) कंसान्तर्गतस्थले 'तव धनुषि बाणबीजानि' ख० ।

(३) कंसान्तर्गतस्थले 'अस्थिमज्जार्णान्तशब्दोऽस्थिमज्जार्णोपरिस्थितं शुक्रात्मकं लक्षयति' ख० ।

(४) 'चतुःशतीशास्त्रेऽप्यनुक्तानां' ख० ।

(५) 'रक्तयोर्नीलरक्तयोरित्यादिना स्वच्छ०' ख० ।

(६) 'मिश्रीशा०' ख ।

(७) 'मय' ख० ।

परस्वातन्त्र्यरूपत्वादिच्छासिद्धिर्महेश्वरि! ॥१६४॥
एताः सर्वोपचारेण पूजयेत्तु वरानने ! ॥

---

त(१)त्वात् पुर(२)शब्दवाच्यत्वं, तेषां त्रिपुराणां जननी समष्टिरूपत्वादम्बिकाशक्तिरेव(३)त्रिपुराम्बिका निरुक्ता चक्रेश्व(४)रीति शेषः ।

स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि ।

इत्याज्ञावतारोक्तरीत्या पर(५)शिवस्य विश्वसर्जनसंहारलक्षणस्वातन्त्र्यलक्षणेच्छासि(६)द्धिरेतच्च(७)क्रार्चकस्य सिद्ध्यति । अ(८)तः सेयमिच्छासिद्धिः(९) अस्मिन् चक्रे स्थितेत्यर्थः । एताः आयुधदेवताः कामेश्वर्याद्याश्चक्रेश्वरीसिद्धियुताः सर्वोपचारैर्गन्धादिभिरुपचारैः पूजयेत् ।

नवमचक्रे(१०)पूजां सवासनामाह–सर्वानन्दमये इति ।

'आनन्दो ब्रह्मेति व्यजानात्' इति (११)'एतस्यैवानन्दस्या-

---

(१) 'धिष्ठानत्वात्' ख० ।
(२) 'पुत्र' क० ।
(३) 'शक्तेरेतत्त्रिपु०' ख० ।
(४) 'चक्रेशीति' ख० ।
(५) 'परस्य शिवस्य' ख० ।
(६) 'शक्ति' ख० ।
(७) 'रेतदर्चकस्य' ख० ।
(८) 'अतः' नास्ति ख० ।
(९) 'शक्तिः' ख० ।
(१०) 'नवमचक्रपूजां' ख० ।
(११) 'इति' नास्ति क० ।

सर्वानन्दमये देवि ! परब्रह्मात्मके परे ॥ १६५ ॥
चक्रे संवित्तिरूपा च महात्रिपुरसुन्दरी ॥
स्वैराचारेण सम्पूज्या त्वहन्तेदन्तयोः समा ॥१६६॥

---

ऽन्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्युक्त(१)रीत्या सर्वानन्दसमष्टिभूतपरमानन्दमयत्वात् परब्रह्मात्मके। अत एव(२) परे विश्वोत्तीर्णे पर(३)मशिवस्पन्दमयत्वाच्चक्रे नवमे संवित्तिरूपा।

स्वसंवित्त्रिपुरा देवी लौहित्यं तद्विमर्शनम् ।

इति अभियुक्त(४)वचनोक्तरीत्या वेदकवेद्ययोरहन्तेदन्तयोः समा मध्यस्था संवित्तिर्महात्रिपुरसुन्दरी पूर्वोक्त(५)-निर्वचना। महाकामकलारूपा प्रकाशविमर्श(६)सामरस्यमहाबिन्दुत्रयहार्धकला महा(७)कामकला तद्रूपा । 'बिन्दुं सङ्कल्प्य वक्त्रं (८)च' इत्यादिच्चतुःशतीशास्त्रोक्तरीत्या निजेच्छारूपैरिन्द्रियप्रीणनैर्द्रव्यैः परिस्फुरत्परमानुसन्धानलक्षणेन स्वैराचारेण संविद्देवता भावनीयेत्यर्थः।

---

(१) 'श्रुत्युक्त्या' ख० ।
(२) 'अत एव' नास्ति क० ।
(३) 'पराशिवानन्दमय०' ख० ।
(४) 'अभियुक्तोक्त०' ख० ।
(५) पूर्वोक्तानिर्वचना' क० ।
(६) 'व्याससमाससमर्थवि०' क० ।
(७) 'महाकामकला' नास्ति क० ।
(८) 'वक्त्रे च' नास्ति क० ।

महाकामकलारूपा पीठविद्यादिसिद्धिदा ॥
महामुद्रामयी देवी पूज्या पञ्चदशात्मिका ॥ १६७ ॥
तत्तत्तिथिमयी(१)नित्या नवमी भैरवी परा ॥

---

प्राप्तिसिद्धिमाह—पीठविद्येति ।

'कापूजाओ इति क्रमात्' इति पूर्वोक्ताः पीठाश्चत्वारः । विद्याः वाग्भवकामराजशक्तितु(२)रीयबीजात्मिकाः आदिशब्दाद्देवताः कामेश्वर्याद्याश्चतस्रस्तेषां तुरी(३)यातीतपद(४)-परशिवविश्रान्तिलक्षणां सिद्धिं ददातीति प्रापयतीति प्राप्तिसिद्धिः । महामुद्रामयी महामुद्रा सर्वविद्यासमष्टिभूतत्वाद्योनिमुद्रा तन्मयी पूज्येत्यर्थः । पञ्चदशात्मिका पञ्चदशाक्षर्या विद्यायाः वाच्यभूता पञ्चदशभूतगुणात्मिका ॥ १६४–१६७॥

तत्तत्तिथिमयीति ।

तत्तत्तिथिमयी प्रतिपदादिपञ्चदशतिथिरूपा । नित्या निजसुखमयनित्यनिरुपमाकारा । नवमी भैरवी परा मूलविद्या तथा ख्याता । इति पूर्वोक्तरीत्या मूलविद्या(५)रूपनवमचक्रेश्वरी विद्या षोडशकलात्मिका मूलदेवी नवमचक्रेश्वरी पूज्ये(६)त्यर्थः ।

---

(१) 'सम्पूज्या परमेशानि ! तत्तत्तिथिमयी परा' ख० ।
(२) 'तुर्य' ख० ।
(३) 'तुर्याता०' ख० ।
(४) 'पद' नास्ति क० ।
(५) 'मूलविद्यामुच्चार्य नवमक्रेश्वरी विद्यया षोड०' ख० ।
(६) 'सम्पूज्येत्यर्थः' ख० ।

प्रतिचक्रं स(१)मुद्रास्तु चक्रसङ्केत(२)चोदिताः १६८॥
नित्यक्लिन्नादिकाश्चैत्र काम्यकर्मानुसारतः ॥

---

प्रतिचक्रमिति ।

प्रतिचक्रं त्रैलोक्यमोहनादिष्वेकस्मिन् चक्रे । चक्रसङ्केते चो(३)-दिताः योनि(४)मुद्राः तत्तच्चक्रेषु पूज्या इति योज्यम् ॥१६८॥

नित्यक्लिन्नेति ।

कामेश्वरीभगमालिन्योरावरणान्तःपातित्वात्तयोर्मध्ये त्रि-कोणाग्रवामकोणयोः स्थितिरुक्ता । शिष्टाः—

नित्यक्लिन्ना तथा नित्या भेरुण्डा वह्निवासिनी ।
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ॥
नित्या नीलपताका च विजया सर्वमङ्गला ।
ज्वालामालिनि चित्रा च—

इति चतुःशतीशास्त्रोक्तास्त्रयोदश नित्यास्त्रिकोणे वा श्रीचक्रमध्यत्रिकोणे वा चतुरस्रान्तराले वा षोडशदलचतुरस्रा-न्तराले वा । काम्यकर्मानुसारतः वश्यादिकाम्यकर्मानुरूपवर्ण-ध्यानपुष्पादिभिः । सुधीस्तत्तत्काम्यकर्म(५)विधानविषयज्ञो

---

(१) 'तु' ख० ।
(२) 'कोदिताः' क० ।
(३) 'सङ्केतकोदिताः' क० ।
(४) 'योनिमुद्राः'—इत्यत्र 'योनिप्राचुर्यतः सैषा सर्वसङ्क्षोभिका पुनरित्यादिना चक्रसङ्केते चक्रे विहिताः सर्वमुद्राः । सर्वसंक्षोभिण्याद्याः' इति ख० पु० पाठः ।
(५) 'कर्मानुविधान०' ख० ।

चतुरस्रान्तराले वा त्रिकोणे वा यजेत् सुधीः ॥१६९॥
अलिना पिशितैर्गन्धैर्धूपैराराध्य देवताः ॥
चक्रपूजां विधायेत्थं कुलदीपं निवेदयेत् ॥१७०॥

---

यजे(१)त् ॥१६९॥

चक्रपूजामुपसंहरन् कुलदीपनिवेदनमाह–अलिनेति ।

अलिना हेतुना । पिशितै(२)र्मांसैः । गन्धधूपशब्दाः स्पष्टार्थाः । देवताः त्रैलोक्यमोहनादिबैन्दवान्तनवचक्रगताः । अलिपिशितगन्धधूपदीपैराराध्य पूर्वोक्तरीत्या चक्रपूजां विधाय कुलदीपं कुलं षट्त्रिंशत्तत्त्वसमुदायरूपं शरीरं तत्र भवं(३)दीपं ।

ततो हृदयपद्मान्तः स्फुरन्तीं संवि(४)दीं कलाम् ।

इत्यभियुक्त(५)वचनोक्तरीत्या हृदयान्तर्भासमानं संवित्कलारूपं दी(६)पं । इन्द्रियद्वारा बहिरर्थेषु तद्रूपेण भासमा(७)नं । अत एव स्वप्रकाशोज्ज्वलं तत्र प्रमाणानिरपेक्षप्रतीतिकं निर्वाणरहितं तत्कु(८)लदीपं निवेदयेत् । पुनः प्रत्यङ्मुखतया तेनैव द्वारेण अन्तः स्वसंविद्विश्रान्तिः तन्निवेदनं नाम ।

---

(१) 'यजेत्' नास्ति ख० ।
(२) 'पिशितगन्ध०' ख० ।
(३) 'भवं' नास्ति ख० ।
(४) 'संविदम्' ख० ।
(५) 'अभियुक्तोक्त०' ख० ।
(६) 'त-चेन्द्रियद्वारा' इति क०पु०पाठः ।
(७) 'भासमानं' नास्ति ख० ।
(८) 'च' ख० ।

अन्तर्बहिर्भासमानं स्वप्रकाशोज्ज्वलं प्रिये ! ॥
पुष्पाञ्जलिं ततः कृत्वा जपं कुर्यात्समाहितः ॥१७१॥
कूटत्रये महादेवि ! कुण्डलीत्रितयेऽपि च ॥

---

संयम्येन्द्रियसञ्चारं प्रोच्चरेन्नादमान्तरम् ।
एष एव जपः प्रोक्तो न तु बाह्यजपो जपः ॥

इति प्रामाणिकवचनोक्तरीत्या समाहि(१)तो नियतेन्द्रियो नादरूपमन्त्रोच्चारणल(२)क्षणं जपं कुर्यात् । शिष्टं स्पष्टम् ॥१७०-१७१॥

जपप्रकारमाह—कूटत्रये इति ।

कूटत्रये कूटानां वाग्भवकामराजशक्तिबीजाख्यानां त्रये कुण्डलीत्रितयेऽपि च कुण्डलीनां त्रितयं ।

आधारं हृदयं बिन्दुस्थानं च परिकीर्तितम् ।

इति स्वच्छन्दसङ्ग्रहोक्तेषु(३) आधारहृदयभ्रूमध्येषु स्थितानां बीजत्रयशिखरच(४)रवर्तिकामकलान्तर्गतसपरार्धकलारूपाणां वन्हिसूर्यसोमकुण्डलि(५)नीनां त्रये चक्राणां पूर्वपूर्वाणां(६) 'अकुले विषुसंज्ञे च' इत्यात्रोक्ताऽकुलादिबिन्द्वन्तस्थानेषु नवसु भावितानां त्रैलोक्यमोहनादिनवचक्राणां एकै-

---

(१) 'समाहितेन्द्रियो' ख० ।
(२) 'लक्षणं' नास्ति ख० ।
(३) 'स्वच्छन्दसङ्ग्रहोक्तरीत्या' क० ।
(४) 'चर' नास्ति ख० ।
(५) 'कुण्डलीनां' ख० ।
(६) 'पूर्वपूर्वेषां' ख० ।

चक्राणां पूर्वपूर्वेषां नादरूपेण योजि(१)ताम् ॥ १७२ ॥

---

कस्मिन् बीजे(२)कुण्डलिन्यां च त्रिंशत्त्रिंशो विभज्य योजितानां नादरूपेण यो(३)जितं त्रैलोक्यमोहनादिच(४)क्रत्रयस्याधारस्थवह्निकुण्ड(५)लीस्थितवाग्भवशिखरवर्तिकामकलान्तर्गतहार्धकलारूपवह्निकुण्डलिन्युत्थानोदितहृ(६)द्गतकामराजबीजपर्यन्तव्यापिनादमयताभावनं वाग्भवबीजजपः । सर्वसौभाग्यदायकादिचक्रस्य हृदयस्थसूर्यमण्डलास्थितकामराजशिखरवर्त्तिकामकलान्तर्गतहार्धकलारूपसूर्यकुण्डलिन्युत्थानोदितबिन्दुस्थानगतशक्तिबीजपर्यन्तव्यापिनादमयताभावनं कामराजजपः । सर्वरोगहरादिचक्रत्रयस्य बिन्दुमण्डला(७)न्तर्गतशक्तिबीजशिखरवर्तिहार्धकलारूपसोमकुण्डलिन्युत्थानोदितब्रह्मरन्ध्रोपरिस्थितशिवतत्त्वातीतसमनासीमपर्यन्तव्यापिनादेन सहोन्मन्यां लयभावनं शक्तिबीज(८)जप इत्यर्थः । तदुक्तमभियुक्तैः—

पिण्डो वा(९)चकविस्तरस्य महतः संस्कारशेष(१०)स्थितिः
नादोऽसौ तव देवि ! मूर्ध्नि समनासीमानमुल्लङ्घयन् ।

---

(१) 'योजनम्' ख० ।
(२) 'बीजे' नास्ति क० ।
(३) 'योजनं' ख० ।
(४) 'नवचक्रस्थादित्र०' ख० ।
(५) 'मण्डल' ख० ।
(६) 'हृत्स्थ' ख० ।
(७) 'बिन्दुस्थानेन्दुमण्डलान्तः' ख० ।
(८) 'शक्तिबीजोच्चारः' ख० ।
(९) 'वाकपद' ख० ।
(१०) 'संस्कारदोषा स्थितिः' ख० ।

तेषु प्राणाग्निमायार्णकलाबिन्द्वर्धचन्द्रिकाः(१) ॥
रोधिनीनादनादान्ताः शक्तिव्या(२)पिकलान्विताः १७३॥
समना चोन्मना चेति द्वादशान्ते स्थिता प्रिये! ॥

---

घण्टाक्वाण इव क्रमेण विरमन्ननन्त्यामणीयस्त(३)मा–
मा(४)जिघ्रन् परचिद्दशामनुपमां मूर्तिं पुराणी(५)मुमे!।
इत्यत्रैवोक्तम् ॥१७२॥
ननु–

दीपाकारोर्धमात्रश्च ललाटे वृ(६)त्तमिष्यते।

इत्यादित्रिष्वपि बीजेषु उन्मनीपर्यन्तमुच्चारः किमिति नोक्तः? प्राणादीनां उन्मन्यन्तानां द्वाद(७)शांशानां सर्वत्र साधारण्येन वक्तुं शक्यत्वादित्यत आह–तेष्विति।

तेषु त्रिष्वपि बीजेषु प्राणो हकारः, अग्निः रेफः, मायार्णः ईकारः, स एव कला। तदुक्तं कामकलाविलासे–

बिन्दुरहङ्कारात्मा रविरेतन्मिथुनसमरसाकारः।
कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दू॥ इति।

बिन्द्वादयः उन्मन्यन्ताः पूर्वोक्तलक्षणाः। एते प्राणादयः

---

(१) 'शक्तिर्व्यापिकयान्विताः' ख०।
(२) 'चन्द्रकाः' ख०।
(३) 'यस्तनीं' ख०।
(४) 'मां' ख०।
(५) 'पुराणीं मम' ख०।
(६) 'वृत्त इष्यते' क०।
(७) 'द्वादश' इत्यधिकं क०।

मूलकुण्डलिनीरूपे मध्यमे च ततः पुनः ॥१७४॥
सृष्ट्युन्मुखे च विश्वस्य स्थितिरूपे महेश्वरि ! ॥
केवलं नादरूपेण उत्तरोत्तरयोजित(१)म् ॥१७५॥

---

उन्मन्यताः द्वा(२)दशान्ते स्थिताः । मूलकुण्डलिनीरूपे वाग्भवबीजे ।

या मात्रा त्रपु(३)सीलता तनुलसत्तन्तुस्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां
ज्ञात्वे(४)त्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥

इति लघुस्तोत्रोक्तरीत्या विश्वस्य सृष्ट्युन्मुखे मध्यमे कामराजबीजे विश्वस्य स्थितिरूपे संहारसृष्ट्योर्मध्यस्थितत्वात् केवलं नादरूपेण नादाद्युन्मन्यन्तावयवोच्चारवर्जनादमात्ररूपेणोत्तरोत्तरयो(५)जिते उच्चारक्रियाविशेषणं वाग्भवबीज(६)शिखरवर्त्तिनं नादं हृद्गतकामराजबीजपर्यन्तमुच्चरेत् । कामराजशिखरवर्तिनं नादं बिन्दुस्थानगतशक्तिबीजपर्यन्तमुच्चरेदित्यर्थः । शबलाकारके एतद्बीजद्वयनादद्वययोगान्मिश्ररूपे तृतीये श-

---

(१) 'योजनम्' ख० ।
(२) 'द्वादश' क० ।
(३) 'त्रपुशीलिता' ख० ।
(४) एष पादः ख० पुस्तके नास्ति ।
(५) 'योजनं' ख० ।
(६) 'बीज' नास्ति क० ।

शबलाकारके देवि ! तृतीये द्वादशी कला ॥
शून्यषट्कं तथा (१)देवि! ह्यवस्थापञ्चकं पुनः॥१७६॥
विषु(२)वं सप्तरूपं च भावयन् मनसा जपेत् ॥

---

क्लिबीजे द्वादशी कलो(३)न्मना स्थितेत्यनुषङ्गः । तेन प्राणादयो द्वादशकला अपि तृतीयबीजशिखरे स्थिता उच्चार्या(४) इति लभ्यते । कोऽर्थः ? यद्यपि [ वाग्भ(५)वकामराजशक्तिबीजत्रयाणां अप्यन्ते प्राणाग्निमायाबिन्द्वर्धचन्द्ररोधिनादनादान्तशक्तिव्यापिकाः समनोन्मनाख्या द्वादश कला वक्तुं शक्यन्ते ।] वाग्भवकामराजबीजयोः (६)सृष्टिस्थितिरूपत्वान्न विश्वातीतोन्मनापर्यन्तमुच्चारः । अतो न विरोध इत्यर्थः ।

जपकाले भाव्या(७)नाह—शून्यषट्कमिति ।

एतानि विद्यावयवेषु भाव्यानि ।

शिखिपिच्छ(८)चित्ररूपैर्मण्डलैः शून्यपञ्चक(९)म् ।

---

(१) 'सुरेशानि !' ख० ।
(२) 'विषुवत्' ख० ।
(३) 'कलोन्मनी' ख० ।
(४) 'उच्चार्या' इति नास्ति ख० ।
(५) कंसान्तर्गतं नास्ति ख० ।
(६) 'प्राणादय उन्मन्यन्तास्तथाऽपि तयोः' इत्यधिकं ख० ।
(७) 'भावनामाह' ख० ।
(८) 'पक्ष' ख० ।
(९) 'षट्ककम्' ख० ।

अग्न्यादिद्वाद(१)शान्तेषु त्रींस्त्रीन् त्यक्त्वा(२)वरानने!।१७७
शून्यत्रयं विजानीयादेकैका(३)न्तरतः प्रिये ! ॥

---

ध्यायतोऽनुत्तरे शू(४)न्ये रूपं (५) व्योमतनुर्भवेत् ॥

इति विज्ञानभैरवभट्टारकोक्तरीत्या शून्यषट्कस्य रूपं ज्ञेयम् । अवस्थापञ्चकं जाग्रत्स्वप्नसुषुप्तितुर्यातीतात्मकम् । एषां जाग्रदादीनां स्वरूपं वक्ष्यति [विषु(६)वं सत्यरूपं च वक्ष्यति]।

शून्यादी(७)नां स्थानानि स्वरूपाणि च क्रमेणाह– अग्न्यादीति ।

एकै(८)कश्च द्वयोर्द्वयोरन्तर इत्यर्थः । अग्न्यादि अग्निः रेफः तदादीन् (९)त्रीन् त्रीन् षट् त्यक्त्वा शून्यत्रयं षट् शून्यानि विजानीयात् । कोऽर्थः ? हकारमायाक्षरयोर्मध्ये रेफः(१०) । मायार्धचन्द्रयोर्मध्ये बिन्दुः(११)। अर्धचन्द्रनादयोर्मध्ये रोधि(१२)-

---

(१) 'द्वादशांशेषु' ख० ।
(२) 'त्यक्ता' ख० ।
(३) 'एकैकान्तरतं' क० ।
(४) 'शून्यं' ख० ।
(५) 'परं' ख० ।
(६) कंसान्तर्गतं नास्ति ख० ।
(७) 'शून्यानां' ख० ।
(८) 'एकश्च एकश्च' ख० ।
(९) 'त्रींस्त्रीन् षट्' ख० ।
(१०) 'रेफं' ख० ।
(११) 'बिन्दुं' ख० ।
(१२) 'रोधिनीं' ख० ।

प्रबोधकरणस्याऽथ (१)जागरत्वेन भावनम् ॥ १७८॥
वन्हौ देवि! महाजाग्रदवस्था त्विन्द्रियद्वयैः ॥

नी । नादशक्त्योर्मध्ये नादा(२)न्तः । शक्तिसमनयोर्मध्ये व्यापि(३)का। समनोर्ध्वे चोन्म(४)ना इति षट् त्यक्त्वा । तत्र रेफबिन्दुरोधिनी(५)नादान्तव्यापिकास्थानेषु पञ्चसु 'शिखिपक्षचित्ररूपैः' इत्यादिपूर्वोक्तरीत्या बार्हिबर्हकगतचन्द्रक(६)सदृशरूपाणि पञ्चशून्यानि भावनीया(७)नीत्यर्थः । षष्ठोन्मना(८)याः स्थाने [ 'पञ्च(९)व्योमतनुर्भवेत्' इति विज्ञानभैरवभट्टारकोक्तरीत्यैव व्योमतनुशून्यं ज्ञेयमित्यन्यश्च विशेषः। शून्यत्रयात्परे स्थाने ]। महाशून्यं निरा(१०)कारं भावयेदि(११)त्यर्थः ।

इदानीमवस्थापञ्चकभावनां क्रमेण विवक्षन्नादौ (१२)जागरितावस्थाभावनामाह–प्रबोधेति ।

(१) 'करणस्यार्थजाग०' ख० ।
(२) 'नादान्तं' ख० ।
(३) 'व्यापिकां' ख० ।
(४) 'उन्मनीं' ख० ।
(५) 'नाद' इत्यधिकं क० ।
(६) 'चन्द्रिका' क० ।
(७) 'भाव्या०' ख० ।
(८) 'षष्ठोन्मनास्थाने तु' ख० ।
(९) कंसान्तर्गतं क० पुस्तके नास्ति ।
(१०) 'निराकारं' नास्ति ख० ।
(११) 'विभावयेदिति' ख० ।
(१२) 'वक्ष्यति आ०' क० ।

आन्तरैः करणैरेव स्वप्नमा(१)यावबोधकः ॥१७९॥
गलदेशे, सुषु(२)प्तिस्तु लीनपूर्वस्य वेदनम् ॥
अन्तःकरणवृत्तीनां लयतो, विषयस्य तु ॥१८०॥

---

इन्द्रियद्वयैः ज्ञानकर्मेन्दिय(३)द्वयैः दशेन्द्रियैः । जाग्रद्व्यव(४)हारो जागरणं प्रबोधो जागर इत्युच्यते, तत्करणस्य प्रकाशस्य जागरत्वेन भावनम् । अतः प्रकाश(५)वाचके वह्नौ तार्तीयबीजशिख(६)रवर्तिनि रेफे महाजाग्रदवस्था सर्वकालिकानिद्राक्षयलक्षणा परप्रबोधदशा भावनीयेत्यर्थः ।

स्वप्नभावनामाह—आन्तरैरिति ।

बाह्येन्द्रिय(७)रहितैरान्तरैः करणैर्मनोबुद्ध्यहङ्कारचित्ताख्यैरेव व्यवहारः प्रमातृस्वप्नः समायया तार्तीय(८)बीजस्थेन चतुर्थस्वरेण अवगतबोधनस्तद्वाच्य इत्यर्थः । गलदेशे स्वप्नस्य(९)स्थानम् ।

सुषुप्तिभावनामाह—सुषुप्तिस्त्विति ।

'स्वप्ने विद्यमानानां अन्तःकरणवृत्तीनां लयतः सर्वेन्द्रि-

---

(१) 'स्वप्नो मायावबोधनः' ख० ।
(२) 'सुषुप्ते तु' क० ।
(३) 'ज्ञानकर्मेन्द्रियैर्दशभिः' ख० ।
(४) 'प्रमातुर्व्यवहारो' ख० ।
(५) 'प्रकाशके' ख० ।
(६) 'शिखर' नास्ति ख० ।
(७) 'विरतै' ख० ।
(८) 'तार्तीयस्थानच०' ख० ।
(९) 'स्वप्नस्थानम्' ख० ।

पूर्वार्णानां विलोमेन भ्रूमध्ये बिन्दुसंस्थिता ॥
तुर्यरूपं तथा(१) चाऽत्र वृत्तार्धादेस्तु सङ्ग्रहः॥१८१॥
चैतन्यव्यक्तिहेतोस्तु नादरूपस्य वेदनम् ॥

---

योपरतिः सुषुप्तिः' इति लक्षणम् । अतो हि (२)लीनपूर्वस्य देहाक्षा(३)दिषु क्रोडीकृतस्य लीनस्यैव(४) स्वात्मनो वेदनं प्रकाशनं भवति । 'सुखमहमस्वाप्सम्' इति पश्चात्सुखमयं स्वात्मरूपं परामृश्यते सेयं (५)सुषुप्तिः । विषयस्य तु विषयं तार्तीयं बीजं विश्वव्यापिस्थानत्वात् । तस्य पूर्वार्णानां बिन्दुपूर्वस्थितानां वर्णानां विलोमेन नाशेन ।

मायाबीजं महेशानि मादनं शक्रसंयुतम् ।
इन्द्रबीजं केवलं तु, इत्यादि—
संहारक्रमयोगेन शक्तिबीजं समुद्धरेत् ।

इत्यन्तेन चतुः(६)शतीशास्त्रे संहारक्रमोद्धृतानां शक्तिबीजवर्णानां विलोमक्रमेण परिपाट्या भ्रूमध्ये बिन्दुसंस्थिता भ्रूमध्यस्थानस्थितहृल्लेखोर्ध्वबिन्दौ स्थिता भावनीयेत्यर्थः ।

तुरीयभावनामाह—तुर्यरूपमिति ।

चैतन्यस्य संविदः व्यक्तेः परामर्शस्य हेतोः । नादरूपस्य पूर्वोक्तलक्षणनादरूपस्य । वेदनमभिव्यक्तिः तुरीयरूपं । तस्य तुरी-

---

(१) 'तस्य' ख० ।
(२) 'हि' इत्यधिकं ख० ।
(३) 'देहादिषु' ख० ।
(४) 'लीनस्थितस्यात्मनो' ख० ।
(५) 'सेयं सुषुप्तिः' नास्ति ख० ।
(६) 'चतुःशतीशास्त्रोक्तरीत्या' ख० ।

तुर्यातीतं सुखस्थानं नादान्तादिस्थितं प्रिये! ॥१८१॥
अत्रैव जपकाले तु पञ्चावस्थाः स्मरेद् बुधः ॥

---

यरूपस्य। अत्र(१) तार्तीयबीजे वृत्तार्धादेः वृत्तार्धं अर्धचन्द्रः आदि(२)शब्देन रोधिनीनादौ(३)गृह्येते तेषां सङ्ग्रहः। तार्तीयबीजशिखरवर्त्यर्धचन्द्ररोधिनीनादेषु स्वात्मचैतन्याभिव्यक्तिकारणनाद(४)कलनात्मकं तुरीयं तुर्यं भावनीयमित्यर्थः।

तुर्यातीतभावनामाह—तुर्यातीतमिति।

तुरीयातीतं।

'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह'।

'आनन्दं ब्रह्मणो विद्वान्'।

इत्युपनिषदुक्तरी(५)त्या म(६)नोवागतीतपर(७)मानन्दस्वरूपम्। सुखस्थानं नादान्तादिस्थितं विलो(८)मसुखस्थाने स्थितं नादान्तशक्तिव्यापिकासमनोन्मनासु स्थितं तुरीयातीतं भावनीयमित्यर्थः। अत्रैव शक्तिबीज एव पञ्चावस्था जागरिताद्याः पूर्वोक्ता जपकाले स्मरेद् बुधः। पञ्चावस्था-

---

(१) 'अत्र' नास्ति क०।
(२) 'शब्दात्' ख०।
(३) 'गृह्यते' ख०।
(४) 'कणन्नादात्मकतुरीयरूपं' क०।
(५) 'क्रमेण' ख०।
(६) 'मनो' नास्ति ख०।
(७) 'परानन्द०' ख।
(८) 'विलोमसुखस्थाने स्थितं' नास्ति ख०।

योगः प्राणात्ममनसां विषुवं प्राणसंज्ञि(१)तम् ॥१८२॥
आधारोत्थितनादे तु लीनं बुद्ध्या(२)त्मरूपकम् ॥
संयोगेन वियोगेन मन्त्राणां महेश्वरि ! ॥१८३॥

---

नुसन्धानपुरःसरं विद्याजपकारणात्तस्था(३)निपुणः ।

इदानीं सप्तविषुवभावनां विवक्ष(४)न्नादौ प्राणविषुवभावनामाह—योग इति ।

प्राणस्य हका(५)रात्मनो वाय्वा(६)त्मनो यष्टुर्मनसश्च संयोगः प्राणविषुवमित्युच्यते । तदुक्तं शैव(७)तन्त्रे—

शिष्यात्मप्राणमनसां संयो(८)गं प्राणकं विदुः । इति ।
॥ १७३–१८२ ॥

मन्त्रविषुवभावनामाह—आधारोत्थितेति ।

आधारान्मूलाधारादुत्थितेन वायुना सम्भूते[९]नादे विद्या(१०)शिखरवर्तिन्यात्मरूपकमात्मनो यद्रूपं संविदात्मकं आ-

---

(१) 'प्राणसंज्ञकम्' ख० ।
(२) 'बुद्ध्वा' ख० ।
(३) 'जपकरणावधाननि०' ख० ।
(४) 'वक्ष्यन्नादौ' क०
(५) 'ककारात्मनो' ख० ।
(६) 'वायोः आत्मनो' ख० ।
(७) 'स्वैरतन्त्रे' ख० ।
(८) 'संयोगः' क० ।
(९) 'सम्भूते' नास्ति क० ।
(१०) 'विद्याशिखर'-इत्यारभ्य 'विद्यामन्त्राणां' इत्यन्तस्य ग्रन्थस्य स्थाने 'बिन्द्वादिषु वर्त्तिन्यात्मनो यष्टुं रूपं संविदात्मकं लीनं नादेनैकरसीभूतं बुद्ध्वा मन्त्राणां' इति ख० पुस्तके पाठः ।

अनाहताद्याधारान्तं नादात्मत्वविचिन्तनम् ॥
नादसंस्पर्शनात्तस्य नाडीविषुवमुच्यते ॥१८४ ॥

---

नन्दैकरसीभूतं विद्यामन्त्रार्णानां वाग्भवकामराजशक्तिबीजानां वियोगेन व्या(१)नरूपेण संयोगेन सम(२)ष्टिरूपेण तुरीय(३)बीजेन अनाहताद्याधारान्तं अनाहतं हृदयस्थानं आधाराणां सर्वेषां अन्तस्थानं ब्रह्मरन्ध्रं(४)अन्तशब्देनोच्चरितं अनाहताद्याधारान्तान्तमिति यावत् । नादात्मत्वविचिन्तनं नादस्य षट्ठुरूपत्वविभावनं विषुवं मन्त्रसंज्ञि(५)तमिति शेषः । कोऽर्थः ? मूलाधारस्थितवाग्भवशिखरवर्तिनं नादं हृदयपर्यन्तमुच्चार्य तत्र स्वयं लीनो भूत्वा स्वात्मनस्तन्म(६)यतानुसन्धानं मन्त्रविषुवमित्यर्थः । तदुक्तं शैवतन्त्रे—

आत्मना नादमध्ये तु लयं सञ्चार्य(७) तत्त्वतः ।
अकारो(८)कारवर्णादिसंयोगेन वियोगतः ॥
हृदयादि(९)बिलान्तं च विषुवं मन्त्रसंज्ञकम् । इति ।

नाडीविषुवभावनामाह—नादसंस्पर्शेति ।

---

(१) 'व्यासरूपेण' ख० ।
(२) 'समष्टिरूपेण' नास्ति ख० ।
(३) 'तुर्यबीजेन च' ख० ।
(४) 'तत्पर्यन्तं । अत्रान्तशब्दः तन्त्रेणोच्चारितः' ख० ।
(५) 'संज्ञमिति' ख० ।
(६) 'स्वात्ममयस्त०' क० ।
(७) 'सञ्चित्य पञ्चमः' ख० ।
(८) 'अकाराकारवर्णादि०' ख० ।
(९) 'हृदयादिदिनान्तान्तं' 'हृदयादीरिनान्तान्तं' इति ख० पुस्तके पाठौ ।

द्वादशग्रन्थिभेदेन वर्णानामन्तरे प्रिये! ॥
नादयोगः प्रशान्तं(१) तु प्रशान्तेन्द्रियगोचरम् ॥ १८५॥
वह्निं माया (२)कलां चैव चेतनामर्धचन्द्रकम् ॥

---

वर्णाद् बीजत्रयशिखरवर्तिनो(३) नादस्य कामकलाक्षरात् द्वादशग्रन्थिभेदेन मूलादिषट्चक्रद्वादशग्रन्थीन् भित्त्वा तेन नाभ्यन्तरे सुषुम्नामध्यमार्गे(४) नादसंस्पर्शात् त्रिबीजशिखरवर्तिनो नादस्य मूलादि(५) ब्रह्मरन्ध्रान्तमुच्चारतः संस्पर्शान्नाडीविषुवमुच्यते। तदुक्तं शैवतन्त्रे—

मूल(६)मन्त्रत्रिशूलेन भित्त्वा ग्रन्थीननुक्रमात्।
नादनाडीसमायोगान्नाडीविषुवभावनम् ॥ इति।

प्रशान्तविषुवभावनामाह—नादयोग इति।

वह्निं रेफं मायामीकारं (७)कलां तन्मध्यवर्तिसपरार्धकलां(८) रेखारूपां चेतनां(९) बिन्दुचैतन्यस्य संस्कारः वेदनरूपत्वात्। तदुक्तं परापञ्चाशिकायाम्—

बिन्दुवेद्यस्य संस्कारो विमर्शः(१०) सर्ग इत्यहम्। इति।

---

(१) 'प्रशान्तस्तत्प्र०' ख०।
(२) 'मायां च कालं च' ख०।
(३) 'शिखरवार्तिकामकला०' ख०।
(४) 'मार्गेण' ख०।
(५) 'मूलात् ब्र०' ख०।
(६) 'स्थूल' ख०।
(७) 'कालं' ख०।
(८) 'कलासम्बन्धिरेखारूपं' ख०।
(९) 'चेतनाबिन्दुः वेद्यस्य' ख०।
(१०) 'विसर्गश्च (स्य) महत्यसौ' ख०।

रोधिनीनादनादान्तान् शक्तौ लीनान् विभावयेत् १८६॥
विषुवं शक्तिसंज्ञं तु तदूर्ध्वं नादचिन्तनम् ॥

---

अर्धचन्द्ररोधिनीनादनादा(१)न्तांश्च पूर्वोक्तलक्षणायां(२) शक्तौ(३) लीनान् विभावयेत् । यतोऽयं नादो(४) यच्चुस्तदतीतशक्तिलयलक्षणः। अतः प्रशान्तेन्द्रियगोचरं सकलेन्द्रियातीतविषये तत्प्रशान्ते विषुवमित्यनुषङ्गः । तदुक्तं **शैवतन्त्रे**—

अकारोकारवर्णौ च मका(५)रो बिन्दुरेव च ।
नादनादान्त(६)संज्ञे तु त्यक्त्वा ब्रह्मादिभिः क्रमात् ॥
सप्तमे शक्तिमध्ये तु शिष्यात्मानं विचिन्तयेत् ।
प्रशान्तं तद्विजानीयात् प्रशान्तेन्द्रियगोचरम् ॥ इति ।

॥१८३-१८६॥

शक्तिकालविषु(७)वभावनामाह—विषुवमिति ।

तदूर्ध्वं शक्तेरू(८)र्ध्वं समनान्तं नादस्य विचिन्तनं शक्तिविषुवं तदूर्ध्वं समनाया अप्यूर्ध्वं । 'नाऽत्र कालकलाभावम्' इति स्वच्छन्दसङ्ग्रहोक्तरीत्या कालातीतोन्मनान्तं नादस्य

---

(१) 'नादान्ताः' ख० ।
(२) 'लक्षणाः' ख० ।
(३) 'शक्तौ लीनान् विभावयेत्' इति नास्ति ख० ।
(४) 'प्रशान्तो नादयोगो' ख० ।
(५) 'मकारं बिन्दुमेव च' ख० ।
(६) 'शक्ती च' ख० ।
(७) 'विषुवयोर्भा०' क० ।
(८) 'शक्तेरूर्ध्वं' नास्ति ख० ।

तदूर्ध्वे कालविषुवमुन्मनान्तं महेश्वरि !॥ १८७ ॥
मुनिचन्द्राऽष्टदशभिस्त्रुटिभिर्नादवेदनम् ॥

---

विचिन्तनं कालविषुवम् । तदु(१)क्तं शैवतन्त्रे—

शक्तिमध्यगतो नादः समानान्तं प्रसर्पति ।
तच्छक्तिविषुवं प्रोक्तमुन्मन्यां कालसंज्ञितम् ॥ इति ॥१८७॥

ननु कियता कालेन नादस्तत्त्वं वेदयतीत्याह—मुनीति ।

स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम् ।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः ॥
तत्परस्य प्रशान्त(२)स्तु त्रुटिरित्यभिधीयते ।

इति तन्त्रान्तरोक्तरीत्या निमेषस्य त्रिसहस्रतमो भागस्त्रुटिः । मुनयः सप्त, चन्द्रः एकः, अष्ट, दश, संख्ये प्रसिद्धे । तेन हकाराद्युन्मन्यन्तानां विद्यावयवानां सप्तदशाधिकाष्टो(३)त्तरदशसहस्रत्रुटिभिरुच्चारे 'अकुले विषुसंज्ञे च' इत्युक्तरीत्या कृते सति नादस्यान्ते तत्त्वस्य वेदनमित्यर्थः ।

तत्त्वविषुवभावनामाह—चैतन्येति ।

अनन्तरो(४)क्तरीत्या चैतन्यस्य स्वात्मतत्त्वस्य व्यक्तेः प्रकाशस्य हेतुस्तत्त्वविषुवम् । कोऽर्थः ? उन्मनोर्ध्वे अनन्तरोक्तसंख्यावत्त्रुटिभिर्नादलयात् स्वात्मानुसन्धानं तत्त्वविषुवमित्यर्थः । तदुक्तं शैवतन्त्रे—

---

(१) 'तदुक्तं' नास्ति क० ।
(२) 'शतांशस्तु' ख० ।
(३) 'सप्तदशाधिकाष्टशतोत्तर०' ख० ।
(४) 'अनन्तरोक्तरीत्या' नास्ति ख० ।

चैतन्यव्यक्तिहेतुश्च विषुवं तत्त्वसंज्ञि(१)तम् ॥१८८॥
परं स्थानं महादेवि! निसर्गानन्दसुन्दरम् ॥
एवं चिन्तयमानस्य जप(२)कालेषु पार्वति ! ॥१८९॥

---

स्वाधिकारे परे धाम्नि विषुवं तत्त्वसंज्ञकम् । इति ॥१८८॥
परं स्थानमिति ।

परं शून्यषट्कावस्थापञ्चकसप्तविषुवकोलाहलातीतं स्थानं विश्वविश्रान्तिभूमित्वात् सर्वविषयानन्दसमष्टिभूतः परमानन्दो निसर्गानन्दः । अत एवाऽनित्याऽशुचिक्ले(३)शदुर्भगभेदप्रदे(४)शपञ्चकपरिपन्थी पराकारणपरत्वात् परमानन्दलक्षणपरमप्रेमास्पदपरसु(५)न्दरपरमशिवरूपं निसर्गानन्दसुन्दरम् ।

पूर्वोक्तभावनायाः फलमाह—एवमिति ।

एवं पूर्वोक्तप्रकारेण जपका(६)ले तु 'आज्ञान्तं सकलं प्रोक्तम्' इत्यादिपूर्वोक्तरीत्या । सकलसकलनिष्कलकेवलनिष्कलरूपास्त्रिविधास्तेषां कालाः 'दीपाकारोर्धमात्रश्च' इत्यादिना पूर्वोक्तविद्यावयवानां उच्चारणकालास्तेषु । शून्यषट्कादिकं चिन्तयमानस्य सकलाः सिद्धयः अणिमाद्याः पूर्वो-

---

(१) 'संज्ञकम्' ख० ।
(२) 'जपकाले षु' क० ।
(३) 'क्लेश' नास्ति ख० ।
(४) 'भेदप्रपञ्चपरि०' ख० ।
(५) 'सुन्दरपरम' इति नास्ति ख० ।
(६) 'जपकालेषु जपः' ख० ।

सिद्धयः सकलास्तूर्णं सिद्धयन्ति त्वत्प्रसादतः ॥
एवं कृत्वा जपं देव्या वामहस्ते निवेदयेत् ॥१९०॥
अनामाङ्गुष्ठयोगेन तर्पयेच्चक्रदेवताः ॥

---

क्ताः त्वत्प्रसादा(१)दात् सिद्ध्यन्ति । प्रकाशात्मनो मम विमर्श-शक्तौ त्वयि प्रसन्नायाम् ।

तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः ।

इति विज्ञानभैरवभट्टारकोक्तरीत्या सर्वप्रत्ययमय(२)ता-मुपगतायां तव प्रसादात् स्वायत्ता भवन्तीत्यर्थः ।

एवमिति ।

एवमुक्तभावनापुरःसरं जपमुक्तलक्षणं कृत्वा प्रकाशवि-मर्शसामरस्यरूपायाः वामहस्ते विश्वकवलीकारपरे विमर्शमये निवेदयेत् ॥१८९–१९०॥

पूजाविधिमुक्त्वा तर्पणविधिमाह—अनामाङ्गुष्ठेति ।

अनामा शक्तिः अङ्गुष्ठः शिवस्तयोर्योगेन मेलनेन शिवश-क्तिमेलनमुद्रयेत्यर्थः । चक्रदेवताश्चतुरस्रादिबैन्दवान्तनवचक्रनि-वासिनीः प्रकाशविमर्शसमरसीभूताः तर्पये(३)दित्यर्थः ।

मदा(४)नैस्तर्पणैः सम्यग्विशुद्धैरमृतात्मभिः ।
महाहन्ता करोमीदं विश्वं ह(५)व्यपुरःसरम् ॥

---

(१) 'त्वत्प्रसादतः' ख० ।
(२) 'मध्यमतामुपगतायाः' क० ।
(३) 'तर्पयेदित्यर्थः' नास्ति ख० ।
(४) 'नैदानै' ख० ।
(५) 'हव्यवपुर्द्धरम्' ख० ।

मद्यं मांसं तथा मत्स्यं देव्या(१)स्तु त्रिनिवेदयेत् ॥१९१॥
कौलाचा(२)रसमायुक्तैर्वीरैस्तु सह पूजयेत् ॥

---

इत्यभियुक्तवचनोक्तरीत्या परस्मिन् लये(३) भावयेदित्यर्थः ।

तर्पणसाधनानि वस्तून्याह—मद्यमिति ।

शिवशक्तिमेलनमुद्रया समस्तमद्यस्य मांसस्य मत्स्य(४)स्य च निवेदनमेव तर्पणमितिभावः ॥ १९१ ॥

समय(५)स्थैरेव सह पूजयेदित्याह–कौलाचारेति ।

कुलमुक्तलक्षणं हेय(६)तया ज्ञेयं ये(७) षां ते कौलाः दक्षिणादिस्रोतःसु दीक्षितास्तेषां आचारः ।

गुरुभक्तिश्च शान्तिश्च पूजा श्रद्धा क्षमा धृतिः ।

इत्यादिस्वच्छन्दसङ्ग्रहादिशा(८)स्त्रेषु विहितास्तद्युक्तैर्वीरैः ।

अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ।
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥

---

(१) 'देव्यै तु' ख० ।
(२) 'कौलिकाचारसंयुक्तै' ख० ।
(३) 'लयं' ख० ।
(४) 'मीनस्य' क० ।
(५) 'समयस्थैनैव' ख० ।
(६) 'तथा' ख० ।
(७) 'यैस्ते कौलिकाः' ख० ।
(८) 'शास्त्रे' ख० ।

पुष्पभेन तु(१)वारे च सौरे च परमेश्वरि! ॥१९२॥
गुरोर्दिने स्वनक्षत्रे चतुर्दश्यष्टमीषु च ॥

---

इति परापञ्चाशिकोक्तरीत्या भेदप्रतीतिसाध(२)नस्य इदन्तारिपोरहमपि सम(३)राङ्गणे प्र(४)लयप्रतिपादनपराः वीराः तैः सह पूजयेत् ।

तन्त्राचारपरिभ्रष्टैः प्रपञ्चव्रतशालिभिः ।
पशुभिः क्षुद्रकर्मस्थैर्न कुर्याद् द्रव्यमेल(५)नम् ॥

इत्यादिवचनसिद्धैः सह न पूजयेदित्यर्थः ।

ननु कस्मिन्नक्षत्रे कस्मिन् वारे कस्मिन् वा दिने पूजा(६) कार्येत्यत आह—पुष्पभेनेति ।

नित्यं सम्पूजयेद्देवीं सासनां सावृतिं क्रमात् ।

इति स्वच्छन्द(७)सङ्ग्रहादिशास्त्रेषु यद्य(८)पि प्रतिदिनं पूजा विहिता तथाऽपि पुष्प(९)भेन पुष्यनक्षत्रेण सह सौरे वारे गुरो(१०)रुदयव्याप्त्योर्दिने स्वनक्षत्रे च चतुर्दश्य-

---

(१) 'नित्यं पुष्पदिने वारे' ख० ।
(२) 'सारस्य' ख० ।
(३) 'रणाङ्गणे' ख० ।
(४) 'प्रलयप्रतिपादनपरैः' ख० ।
(५) 'भोजनम्' ख० ।
(६) 'पूजेयं' क० ।
(७) 'स्वच्छन्द' नास्ति क० ।
(८) 'यद्यपि' नास्ति ख० ।
(९) 'पुष्यदिने' ख० ।
(१०) 'गुरूदय०' ख० ।

चक्रपूजां विशेषेण योगिनीनां समाचरेत् ॥ १९३ ॥
चतुःषष्टि(१)युताः कोट्यो योगिनीनां महौजसाम् ॥
चक्रमेतत् समाश्रित्य संस्थिता वीरवन्दिते! ॥ १९४ ॥

---

ष्टमीषु तिथिषु च(२) चक्रपूजां चतुरस्रादिबैन्दवान्तचक्रगतानां देवतानां पूजां विशेषेण समाचरेत् । नित्यपूजा(३)वन्न भवति, किन्तु नैमित्तिकतया । अष्टाष्टकादि(४)योगिनीगणप्रीणनपुरःसरं पूजयेदित्यर्थः ॥ १९२-१९३ ॥

ननु(५) चक्रे अष्टाष्टकपूजनं कथं सङ्गच्छते इति शङ्कामुपनुदन् विशेषपूजामेव विवृणोति-चतुःषष्टीति ।

त्रैलोक्यमोहनचक्रनिवासिनीनां ब्राह्म्यादीनां अंशभूताः अक्षोभ्याद्याः चतुःषष्टियोगिन्यः तासां प्रत्येकमंशभूतानां (६)कोटिसङ्ख्याकानां महौजसां महाप्रभावशालिनीनां योगिनीनामुक्तलक्षणानां मिलि(७)त्वा चतुःषष्टिकोट्यो यतश्चक्रमेतत् समाश्रित्य संस्थिताः । मध्ये (८)भूगृहस्ततः मध्यभूगृहोदितचतुःषष्टियोगिनीनां समष्टिभूतानां अक्षोभ्यादीनां । अष्टा(९)ष्टकं अष्टका-

---

(१) 'चतुःषष्टिर्यतः' ख० ।
(२) 'च' नास्ति ख० ।
(३) 'नित्यपूजा तु भवति' ख० ।
(४) 'अष्टाष्टकादियोगिनीनाम्' ख० ।
(५) 'ननु' इत्यारभ्य 'चतुःषष्टीति' इत्यन्तं नास्ति ख० ।
(६) 'कोटिकोटिसं०' ख० ।
(७) 'इत्युक्तत्वात्' ख० ।
(८) 'मध्यमभूगृहान्तश्चतुःषष्टिकोटियोगिनीसमष्टिभूतानां' ख० ।
(९) 'अष्टाष्टकं' नास्ति ख० ।

अष्टाष्टकं तु कर्तव्यं वित्तशाठ्यविवर्जितम् ॥
त्वमेव तासां रूपेण क्रीडसे विश्वमोहिनी ॥ १९५ ॥
अज्ञात्वा तु कुलाचारमयष्ट्वा गुरुपादुकाम् ॥

---

नामष्टकं । वित्तशाठ्यविवर्जितं स्वस्ववित्त(१)वञ्चनाहीनं यथा भवति तथा कर्तव्यम् । अत्र(२)कृतिर्नाम पूजनक्रियायोगोऽभिप्रेतः ।

ननु तासां पूजने किमायातं ममेत्यत आह—त्वमेवेति ।

प्रकाशात्मनो विश्वबोधकस्य (३)ममांशभूता विमर्शरूपिणी । त्वमेव बैन्दवचक्रगता विश्वमोहिनी संसारित्वोपपादनकारिणी तासां ब्राह्म्यादीनां अक्षोभ्यादीनां च रूपेण क्रीडसे ।

एका सती भगवती परमार्थतोऽपि
सन्दृश्यसे बहुविधा ननु नर्तकीव ।

इत्यभियुक्तोक्तरीत्या तत्तद्रूपेण परिणमसे । अतस्त्वत्सदृशभूतयोगिनीयजनेन त्वमेव प्रीणासीत्यर्थः ॥ १९४-१९५ ॥

ननु व्युत्पत्तिब(४)लेन वा आगमार्थमवगम्य तत्तत्तन्त्रा(५)न्तरे पूजनादिषु प्रवृत्तिः स्यात् किं गुरूपदेशेनेत्याशङ्क्याह—अज्ञात्वेति ।

---

(१) 'विभव' ख० ।
(२) 'अत्र कृतिर्नाम' नास्ति ख० ।
(३) 'मम' नास्ति ख० ।
(४) 'बलादेव' ख० ।
(५) 'तत्तत्तन्त्रान्तरेषु' ख० ।

योऽस्मिन् शास्त्रे प्रवर्तेत तं त्वं पीड(१)यसि ध्रुवम् ॥१९६॥
एवं ज्ञात्वा वरारोहे ! कौलाचारपरः सदा ॥

---

स्वप्रकाशशिवमूर्तिरेकिका
तद्विमर्शतनुरेकिका तयोः ।
सामरस्यवपुरिष्यते परा
पादुका परशिवात्मनो गुरोः ॥

इत्यस्मद्गुरूक्तरीत्या (२)गुरोः ।
अविदित्वा कुलाचारं कुलं कौलिकदर्शनम् ।

तत्राधारः (३)स्वच्छन्दसङ्ग्रहादिशास्त्रे विहितः । तं गुरुमुखादविज्ञाय योऽस्मिन् शास्त्रे प्रवर्तेत। अस्मिन् शास्त्रे पूर्वोक्तपरमहितपरदेवतायजनपरमार्थसाधकः (४)तदुक्तार्थाचरणपरो भवेत् । तं (५)चुम्बकसाधकं साधकमांसमज्जादिशोषणादिरूपेण पीडयसि गृह्णासि, ध्रुवं नात्र शङ्का । अतो गुरुमुखादेव अखिल(६)मप्यवगम्य अस्मिन् शास्त्रे प्रवर्तितव्यं, अन्यथा निष्फलं स्यादित्यर्थः ॥१९६॥

एवं ज्ञात्वेति ।

---

(१) 'पीडयसे' क० ।
(२) 'त्रिधामगुरोः' ख० ।
(३) 'तन्त्राचारं' क० ।
(४) 'साधके प्रवर्तेत तदुक्तार्चाकरणविचरणपरो भवेत्' ख० ।
(५) 'चुबकं साधकाधमं त्वं डाकिनीक्रूरयोगिनीरूपेण' इति क० पु० पाठः ।
(६) 'अखिलागमार्थानव०' ख० ।

आवयोः शबलाकारं मद्यं (१)तत्र निवेद्य च ॥१९७॥
त्वत्प्रधा(२)प्रसराकारास्त्वामेव परिभावयेत् ॥

---

वरारोहे ! 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी' इति निघण्टुः । अत (३)एवमुक्तप्रकारेण ज्ञात्वा गुरुमुखादेव । कौलाचारपरः कौलिकाः पूर्वोक्तलक्षणाः तेषां विहिताः स्वच्छन्दसङ्ग्रहादिशास्त्रेष्वाचाराः सदा तदनुष्ठानपरः । आवयोः प्रकाशविमर्शात्मनोः शबलाकारम् ।

सुरा शक्तिः शिवो मांसमानन्दो मोक्ष उच्यते ।

इत्यभियुक्तवचनोक्तरीत्या सामरस्यापादानरूपं तत्पूर्वोक्तरीत्या शोधितममृतीकृतं मद्यं(४)मांसं निवेद्याऽऽवयो(५)र्नियोज्यम् । त्वत्प्रधा(६)प्रसराकारः । तत्र विमर्शशक्तेः प्रधा(७) स्पन्दः तत्प्रसराः तदुद्भू(८)ताः आकाराः यासामावरणदेवतानां तास्त(९)थोक्तास्त्वामेव त्वदन्यतो न पृथ(१०)ग्भूताः परिभावयेत् ।

---

(१) 'रुद्रं तच्च' ख० ।
(२) 'त्वत्प्रथाप्र०' ख० ।
(३) 'अतः' नास्ति ख० ।
(४) 'मद्यं मांसं' नास्ति ख० ।
(५) 'आवयोरित्येव यो०' ख० ।
(६) 'त्वत्प्रथाप्र०' ख० ।
(७) 'प्रथा' ख० ।
(८) 'तद्भूताः' ख० ।
(९) 'तास्तथाविधास्त्वमेव' ख० ।
(१०) 'पृथग्याताः' ख० ।

त्वामिच्छाविग्रहां देवीं गुरुरूपां विभावयेत् ॥१९८॥
त्वन्मय(१)स्य गुरोः शेषं निवेद्याऽऽत्मनि योजयेत् ॥
योगिनीनां महादेवि! बटुकायाऽऽत्मरूपिणे ॥१९९॥

---

मूलोद्भवं शक्तिचक्रं यतस्तन्मयतां गतम् ।
तस्मिन्नेवाऽ(२)व्यये धाम्नि विलीनं परिभावयेत् ॥

इत्यभियुक्त(३)वचनोक्तरीत्या विमर्शशक्तेः विलासभूताद्यकाराः यास्ताः आवरणदेवतास्तत्रैव विलीना भावयेदित्यर्थः ।

त्वामिति ।

देवीं विश्व(४)रूपिणीं विश्वानुजिघृक्ष(५)या गृहीतलीलाविग्रहां इच्छा(६)विग्रहामित्यर्थः । त्वामेव गुरुरूपां विभावयेत् । त्वन्मय(७)स्य त्वद्रूपस्य गुरोः तद्धेतुं निवेद्य शेषं देवतागुरुनिवेदितशेष(८)मात्मनि योजयेत् यावत्साधकस्ताभ्यां समरसीभवति, तावच्छेषं स्वयमुपभुञ्जीतेत्यर्थः ।

बलिनिवेदनमाह—योगिनीनामिति ।

---

(१) 'शेषं गुरोर्निवेद्याऽपि पश्चादात्मनि योजयेत्' ख० ।
(२) 'तस्मिन् परेऽव्यये' ख० ।
(३) 'इत्याभियुक्तोक्त्या' ख० ।
(४) 'विमर्शरूपिणीं' ख० ।
(५) 'विश्वानुजिघृक्षागृही०' ख० ।
(६) 'इच्छाविग्रहां' नास्ति क० ।
(७) 'त्वन्मयस्य' नास्ति ख० ।
(८) 'शेषं' नास्ति क० ।

क्षेत्राणां पतये मह्यं बलिं कुर्वीत हेतुना ॥
नित्यं पि(१)बन् वमन् खादन् स्वेच्छाचारपरः स्वयम् २००॥
अहन्तेदन्तयोरैक्यं भावयन् विहरेत् सुखम् ॥

---

योगिनीनां पूर्वोक्तरीत्या मातृमानमेयमरीचीनामात्मरूपिणे परमा(२)नन्दस्पन्दरूपिणे बटुकाय । क्षेत्राणां पतये क्षेत्राणि शरीराणि तेषां पतिर्जीवात्मा (३)तस्मै । मह्यं मदहन्ताविष्टाय । हेतुना मद्येन सद्वितीयेन । बलिं कुर्वीत ।

श्वासद्वयनिरोधेन कुण्डलीत्रयमे(४)लनात् ।
यज्जीवशिवयोरैक्यं तेनासावान्तरो बलिः ॥

इत्यस्मद्गुरूक्तरीत्या सद्वितीयमद्य(५)स्वीकारेण उल्लसिते मनसि। अत (६)एव प्राणापानयोः सञ्चारे शान्ते निरस्ते त्रि(७)त्वलक्षणे भेदे शिवोऽहमस्मीति स्वान्तरो बलिरित्यर्थः । ततः स्वैराचारपरो भूयादित्याह—नित्यमिति ।

नित्यं प्रत्यहं पिबन् देवतागुरुनिवेदितशेषं हेतुं खादन् तच्छेषं(८) खाद्यं वमन् द्वयमपीति सामर्थ्याल्लभ्यम् । स्वेच्छाचारपरः ।

---

(१) 'पिबल्त्यन्वमन्खादन्' ख० ।
(२) 'परमात्मस्वरूपिणे' ख० ।
(३) 'अस्मै' ख० ।
(४) 'कुण्डलिनीत्र०' ख० ।
(५) 'रुजस्वीकरणोल्लासिते' ख० ।
(६) 'स्वतः' ख० ।
(७) 'त्रितत्वलक्षणे' ख० ।
(८) 'तच्छेषं' नास्ति क० ।

एतत्ते कथितं सर्वं सङ्केतत्रयमुत्तमम् ॥ २०१ ॥

---

यत्र यत्र मनस्तुष्टिर्मनस्तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं सम्प्रकाशते ॥

इति विज्ञानभैरवभट्टारकोक्तरीत्या स्वस्य यत्र यत्रेच्छा जायते (१)तत्तदेव शास्त्रवि(२)हितं, यत्र यत्रेच्छा न जायते तत्तदेव(३) शास्त्रनिषिद्ध(४)मपि(५) वर्तते । अतः स्वेच्छानुकूलरूप(६)पदार्थाननु(७)भवेत् । प्रतिकूलपदार्थान् परित्यजेदित्यर्थः । अहन्तेदन्तयोरैक्यं भावयन् अहन्ता ज्ञातृधर्मः इदन्ता ज्ञेयधर्मः तयोरैक्यम् ।

यत्र यत्र मिलिता मरीचयः
तत्र (८)तत्र विभुरेव जृम्भते ।

इत्यादिपूर्वप्रतिपादितरीत्या ज्ञातृज्ञेयचैतन्ययोः समरसीकरणलक्षणं ज्ञानं (९)तदेवाहमिति भावयन् सुखं विहरेत् । परिपूर्णज्ञानानन्दो भवेदित्यर्थः । तदुक्तं विज्ञानभैरवभट्टारकैः—

जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।
भावयेद्भरितावस्थां महानन्दस्ततो भवेत् ॥ इति ।

---

(१) 'तत्र तत्र' क० ।
(२) 'निषिद्ध' क० ।
(३) 'तत्र तत्र' क० ।
(४) 'विहितम्' क० ।
(५) 'अपि वर्तते' नास्ति ख० ।
(६) 'रूप' नास्ति ख० ।
(७) 'अनुभावयेत्' ख० ।
(८) एष पादो नास्ति ख० ।
(९) 'जानन्' क० ।

गोपनीयं प्रयत्नेन स्वगुह्य(१)मिव सुव्रते ! ।
चुम्ब(२)के ज्ञानलुब्धे च(३) न प्रकाश्यं त्वयाऽनघे! २०२
अन्यायेन न दातव्यं नास्तिकानां महेश्वरि ! ॥

---

परमप्रकृतमुपसंहरति–एतदिति ।

स्पष्टम् ॥१९७–२०१॥

सर्वज्ञानोत्तमत्वादत्यन्तगोपनीयमित्याह–गोपनीयमिति ।

यथा स्वगुह्यं योनिं परपुरुषेभ्यो गोप(४)यसि प्रयत्नेन, तथा (५)एतदपि सङ्केतत्रयं अनर्हेभ्यो गोपनीयमित्यर्थः॥

ननु (६)केऽनर्हा येभ्यो गोपनीयमित्यत आह–चुम्बके इति ।

भक्तिहीनोऽनेक(७)त्राऽऽसक्तः । तत्तत्त(८)न्त्रान्तरेषु विद्यामात्रपाठा(९)च्चुम्बकः । ज्ञानलुब्धो विद्यासाधारण्यात् काव्यनाटकादिविद्यावदत्राऽपि ज्ञानं सम्पाद्यमिति मन्वानः तयोर्द्वयोरपि इदं (१०)रहस्यं त्वया न प्रकटीकरणीयमित्यर्थः॥२०२॥

---

(१) 'स्वयोनि०' क० ।
(२) 'चम्बुके' क० ।
(३) 'वा' ख० ।
(४) 'गोपनीयम्' क० ।
(५) 'इदमपि' ख० ।
(६) 'केनानर्हेभ्यो' क० ।
(७) 'भक्तिहीनोऽन्यत्राऽऽसक्तः' ख० ।
(८) 'तत्तत्तन्त्रवरेषु' ख० ।
(९) 'विद्यामात्रसाधी चम्बुकः' क० ।
(१०) 'इदं' नास्ति क० ।

एवं त्वयाऽहमाज्ञप्तो मदिच्छारूपया प्रभो! ॥ २०३॥

---

विध्यति(१)क्रमादन्यायेन न करणीयमित्याह-अन्यायेनेति ।

विध्यतिक्रम एवाऽन्यायः । 'नास्ति परलोकः' इति ये (२)मन्यन्ते ते (३)चम्बुका बौद्धादयः ते नास्तिकाः ।

ननु अत्र को विधिरित्यत आह—एवमिति ।

प्रभो ! जगत्प्र(४)वृत्तिनियमनप्रभावशालिनि । अत एव ।

शक्त्या (५)हीने शिवे शून्ये (६)नाम धाम न विद्यते ।

इति चतुःशतीशास्त्रोक्तरीत्या त्वया विनाऽहं किमपि कर्तुं (७)न शक्तः, वक्तुं न समर्थः । तत् मदिच्छारूपया ममाऽखिलेश्वरस्याऽखिलागमशास्त्रवक्तुः इच्छारूपया विवक्षा(८)रूपया अनाश्रितकलया आज्ञप्तः प्रेरितः(९)। ज्ञानमेवमुक्तलक्षणं प्रोक्तवानस्मि । (१०)ततस्त्वदाज्ञैव विधिरित्यर्थः ॥ २०३ ॥

---

(१) 'विध्यातिक्रमणादन्यायो न करणिय इत्यत आह'-ख० ।
(२) 'मन्वते' ख० ।
(३) 'ते चम्बुकाः' नास्ति ख० ।
(४) 'जगत्प्रकृतिविवृत्तिनियमप्र०' ख० ।
(५) 'विना' ख० ।
(६) 'सूक्ष्मे' ख० ।
(७) 'न शक्तः' नास्ति ख० ।
(८) 'विवक्षारूपया' नास्ति ख० ।
(९) 'प्रोषितः' ख० ।
(१०) 'ततस्त्वदाज्ञैव विधिरित्यर्थः' नास्ति ख० ।

अ(१)ज्ञानेन तु यो दद्यात् स परेतो भविष्यति ॥
सङ्केतं यो वि(२)जानाति योगिनीनां भवेत्प्रियः ॥२०४॥
सर्वेप्सितफलावाप्तिः सर्वकामफलाश्रयः ॥

---

अत(३)स्तदतिक्रमे महदनिष्टं स्यादित्याह—अज्ञानेनेति ।

अतस्त्वदाज्ञाविधिमुल्लङ्घ्य चुम्बकादिभ्यो य एतज्ज्ञानं दद्यात् स परेतो भविष्यति ।

एतत्परिज्ञानफलमाह—सङ्केतमिति ।

एतत् सङ्केतत्रयं गुरुमुखादेव यो विजानाति स योगिनीनां योगः परमशिवसमवायः तद्वत्यः परमाचिन्मरीचिभूताः शक्तयः तासां प्रियः परमशिवः तस्याऽनन्तशक्ति(४)मत्त्वात् । तदुक्तं तन्त्रान्तरे—

शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः । इति ।

परमशिव(५) एव भवेदित्यर्थः ॥२०४॥

ननु परशिवतादात्म्यवपुषा पुरुषार्थः किमित्यत आह—सर्वेप्सितेति ।

यतः सर्वेषां जनानां काम्यानां (६)काम्यमानानां फला-

---

(१) इदं पद्यार्धं ख० पु० नास्ति ।
(२) 'योऽभिजा०' ख० ।
(३) 'अत' इत्यारभ्य 'अज्ञानेनेति' इत्यन्तो ग्रन्थः ख०पु०नास्ति ।
(४) 'शक्तित्वात्' ख० ।
(५) 'परमशिव' इत्यारभ्य 'सर्वेप्सितेति' इत्यन्तं ख०पु०नास्ति ।
(६) 'काम्यानां' नास्ति क० ।

यतोऽपि दृश्यते देवि! कथं वि(१)द्यान्न चिन्तयेत्॥२०५॥

---

नामाश्रयः परमशिवः । अतः (२)सर्वेप्सितफलावाप्तिः सर्वेषां यानीप्सितानि स्पृहणीयानि फलानि तेषां प्राप्तिः परमशिवता-दात्म्य(३)परिज्ञानाद्भवति, स एव परमपुरुषार्थ इत्यर्थः ।

ननु स कुत्र दृश्यत इत्यत आह—यतोऽपीति ।

यतोऽपि यत्र क्वापि बहिरन्तर्वा मनः प्रसरति, तत्र(४) तदनुभवरूपेण स एव दृश्यते तस्य सर्वगतत्वात् । तदुक्तं विज्ञानभैरवभट्टारकैः—

यत्र यत्र मनो याति बाह्ये (५)वाऽभ्यन्तरे प्रिये! ।
तत्र तत्र शिवावस्था व्यापक(६)त्वात्प्रकाशयते ॥ इति ।
तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः । इति(७)च ॥

ननु कथं तथा दृश्यत इत्यत आह—कथं वि(८)द्यानिति ।

सत्यं दृश्यते तथा न पश्यति 'न मां पश्यति कश्चन' इत्युपनिषदुक्तरीत्या—

प्रत्यक्षगोचरं देवं लोकं चाधि(९)प्रमाथिनम् ।

---

(१) 'कथञ्चिन्न विचिन्तयेत्' ख० ।
(२) 'सर्वेप्सितफलावाप्तिः' नास्ति ख० ।
(३) 'तादात्म्य' नास्ति क० ।
(४) 'एतदनु०' क० ।
(५) 'चाऽभ्यन्तरेऽपि च' ख० ।
(६) 'व्यापकः स्यात् क यास्यसि' ख० ।
(७) 'च' नास्ति ख० ।
(८) 'कथञ्चिन्न विचिन्तयेत् ' ख० ।
(९) 'चातिप्र०' ख० ।

दृष्ट्वा स्मृति(१)शिरस्सान्द्रमनुक्रोशति दुःखितः ॥

इति तन्त्रान्तरोक्तरीत्या दृश्यमानमप्युपदेशहीनाः न प-श्यन्ति । 'निष्कलत्वं शिवे (२)बुद्ध्वा' इति निष्कल(३)पर-शिवतादात्म्यापरोक्षानुभवशाली गुरुकटाक्षवीक्षणात् त्रुटितस-(४)मस्तपाशजालः परिस्फुरत्परमाशिवाहन्ताविज्ञानः (५)इदं कथं चिन्तयेत् इति तत्सर्वत्र समभावं कथञ्चिन्न पश्ये-दित्यर्थः ॥ २०५ ॥

शिवेनाऽति(६)रहस्यत्वादविस्पष्टतयोदितम् ।
त्वद्रूपं नाथवचनात् विवृतं(७)नो क्षमस्व तत् ॥

इति श्रीमत्परमयोगीन्द्रपुण्यानन्दनाथ-
शिष्याऽमृतानन्दनाथयोगिप्रवरविरचितायां
योगिनीहृदयदीपिकायां पूजासङ्केतः
समासोऽयं तृतीयः ।




(१) 'श्रुति' ख० ।
(२) 'बुद्ध्या' क० ।
(३) 'निष्कलत्वं परमशि०' क० ।
(४) 'समस्त' नास्ति ख० ।
(५) 'कथञ्चिद्विचि०' ख० ।
(६) 'शिवेनाऽम्ब ! रह०' क० ।
(७) 'विवृतं मोक्षमुच्यते' ख० ।

# योगिनीहृदयदीपिकायामुल्लिखितग्रन्थ-ग्रन्थकर्त्तृणां नामानि ।



